वदानं समाप्तम् १८, 254B, इति मल्लपताकावदानं समाप्तम् १९; 268B, इति सकुलाख्यावदानं समाप्तम् २०, 271B, इति राष्ट्रपालावदानं समाप्तम् २१; 278B, इति प्रवरावदानं समाप्तम् २२; 285A, इति पुण्यसेनावदानं समाप्तम् २३, 290B, इति भवशर्मावदानं समाप्तम् २४; 298A, इति मधुरस्वरावदानं समाप्तम् २५; 305A, इति पद्मकावदानं समाप्तम् २६—after this we have –

अथाशोको महीपाल उपगुप्त यतिं गुरु ।
कृताञ्जलिपुटो नत्वा पुनरेवमभाषत ॥
भदन्त श्रोतुमिच्छामि पुनरन्यत् सुभाषितम ।
तद्यथा गुरुणा ख्यातं तथा देष्टुं त्वमर्हसि ॥

The MS ends abruptly

रत्नावदानमालेयं यत्र लोके प्रवर्त्तते ।
सर्व्वदा तत्र सर्व्वेषु भूयात् सद्धर्म्ममङ्गलम् ॥
सत्त्वाः सन्तु सुखापन्नाः सम्बोधिसाधनोद्यताः ।
त्रिरत्नशरणं यातास्सन्तु सर्व्वदा शुभे ॥
विलयं यान्तु सर्व्वत्र दुष्टा मारगणा अपि ।
सर्व्वे सत्त्वाश्च सद्धर्मे साधयन्तु समाहिता ॥
काले वर्षन्तु मेघाश्च भूयाच्छस्यवती मही ।
बहुक्षीरप्रदा गावः सत्त्वाः सर्व्वे शुभाशयाः ॥
बहुभि . .

This is evidently the last chapter, and its number is 26 The MS described by Rajendralāla, referred to above, has 10 chapters more, being complete in 36 chapters The work appears to be more or less a metrical version of Divyāvadānamāla, a prose work. The whole of Śāntideva's Bodhicaryāvatāra is included in this

I am not sure how far the name Asokāvadāna is justified, as the compiler, at the end of the work, seems to call it "रत्नावदानमाला"।

## 26.

### 4778. पानीयावदानं । *Pānīyāvadāna*

Substance, palm leaf. $11\frac{1}{4} \times 1\frac{3}{4}$ inches. Folia, 3. Lines, 4 on a page Character, Newari Date, N S 429 Appearance, old and discoloured Complete

*Colophons* :—पानीयावदानं समाप्तम् ।

It begins :—पानीय इति बुधो भगवान् सत्छतो...

*Post-Col.* :—यथादृष्ट ० ॥ श्रेयोस्तु ॥ सम्वत् ४२८ थाशुनि शुभे पूर्णमास्या कायस्थ श्रीजेतसिंङसन घोपा (?) शुभमस्तु सर्व्वजगता ।

## 27.

### 4786. पिण्डपात्रावदान । *Pindapāttrāvadāna.*

Substance, Nepalese paper $8\frac{3}{4} \times 2\frac{1}{4}$ inches Folia, 38 by counting Lines 5 on a page Character, *Newari of the 16th century* Appearance worm eaten throughout

*Col.* .—इति पिण्डपात्रावदानं समाप्तम् ।

For a work of this name see Nep. Bud Lit p. 195

## 28

### 10786 भगवत्याः प्रज्ञापारमितायाः रत्नगुणसञ्चयगाथा ।

*Bhagavatyāḥ Prajñāpāramitāyāḥ*
*Ratnaguṇasañcayaḥāthā.*

Substance, seasoned palm-leaf 10 × 2 inches Folia, 29 Lines 6 on a page *With two holes equally distant from the centre Extent in ślokas, 1072 Character, old Newari, Bhujimo Date, N S 295 = 1175 A D* Appearance, old Generally correct Complete. The first leaf is a restoration

It begins with the hymn to Prajñāpāramitā by Rāhula bhadra in 20 stanzas, with the *phalaśruti forming the 21st*

Then 2B. नमः सर्व्वबुद्धबोधिसत्त्वेभ्य ।

अथ खलु भगवांस्तासां चतसृणां पर्षदां संप्रहर्षणार्थं पुनरपीमां प्रज्ञापारमितां प्रदिदीपयमानस्तस्यां वेलायां इमां गाथा[] अभाषत ।

वरप्रेम गौरवु प्रसादु उपस्थपित्वा
प्रजहित्व आवरणक्लेशमला निरान्ताः ।
शृणुता जगाश्चमभिप्रस्थित शूरकाना
प्रज्ञापारमित यत्र चरन्ति शूरा ॥ इत्यादि ।

Prof. Bendall speaks of a Ratnagunasameaya (Cam Cat., p 188) which is divided into 32 sections and which applies to Astasāhasrikā, divided into 82 parivarttas. It seems that when it applies to Śatasāhasrikā, it is divided into 84 parivarttas, though that work is divided into 72 parivarttas

*The Last Colophon* —

भगवत्यां रत्नगुणसञ्चयगाथायां परीन्दनापरिवर्त्तो नाम द्वात्रिंशतितम' । गाथा faded ॥ शतसाहस्रिकाया भगवत्या प्रज्ञापारमिताया सञ्चयगाथापरिवर्त्तश्चतुरशीतितम समाप्त ।

*Post Col* —ये धर्म्मा इत्यादि ।

महाराजाधिराजश्रीहरदेवाय राज्ये संवत् ६८५ आषाढ़ पूर्णमास्या आदित्यदिने लिखापितमिदं पुस्तकमिति ।

Nanjio in his catalogue, col 197, para 864, speaks of a Prajñāpāramitā-Sañcaya-Gāthā translated into Chinese between A D 980—1000 For a Tibetan translation, see Beckh, p 10, para 1.

## 29

9974 कारण्डव्यूह । *Karanda vyūha*

Substance, unseasoned palm leaf 15×2 inches Folia 58, of which foll 54 and 55 are missing Lines, 5, 6 on a page Character Newari Appearance soiled Complete Dated N S 713 = A D 1593

*Colophon* :—आर्य्यकारण्डव्यूह नाम महायानसूत्ररत्नराजं समाप्तम् ।

*Post-Colophon statement* :—ये धर्म्मा हेतुप्रभवा, etc, etc.

देयधर्म्मोय प्रवरमहायानयायिनो परमोपासक शाक्यवंशचन्द्रज्योतिकस्य

यदन्त पुण्य भवत भवचार्य्योपाध्यामातापितृपूर्व्वंगम कृत्वा सकलप्राग्ज्वरासिनुत्तल- ज्ञायफल प्राप्नुयात ।

राजाधिराजपरमेश्वरपरमभट्टारक श्रीश्रीजयस्थितिमल्लदेवविजराज्यम् ।

दानपतिश्रीकाष्ठमण्डपमहानगरे चैत्यमगुडितोरमङ्गलीनकविहारावस्थित- चनोरपामकवालिभूचन्द्र + + + + + + +

तस्य पुत्री लक्ष्मीमयि द्वितिय पुत्र चन्द्रमानस्य भार्य्यानिकलक्ष्मी तस्य पुत्र +

+ + + + + । एते आत्ममानपुत्रपरिवारस्य आयु आरोगजनधनलक्ष्मीवृद्धिरस्तु ।

श्रेयोऽस्तु सम्वत् ७१२ माघमास शुक्लपक्ष सप्तम्याया + + +

परिघयोगे गुरुवासरे एतद्दिने प्रतिष्ठा कुर्ते ।

लिखितेय श्रीकाष्ठमण्डपसयोतारपूर्व्वपार्श्वे तलमूरमहाविहारावस्थित खण्डचूकलि + + + महायानकुलवज्राचार्य्यश्रीयचन्द्र लिखितमिति । यथादृष्टं तथालिखितं etc , etc

+ + + + + + शुभमस्तु सर्व्वजगताम् ।

The work was printed in 1873 in Calcutta by Satyavrata Sāmaśrami in a series of Jaina works

A full description of its contents is to be found in Nep Bud Lit of Rājendralāl, p 95, where it is named Guna Kāranda vyūha The *full name* of the work is Avalokiteśvara Guna-Kāranda vyūha

See also Bendall's Cam Cat, pp 9 81, 88, 47, 52, 77 and 174, and my Nep Cat for 1905, p 89, and that for 1915, pp 9, 157 and 207

Translated into Chinese between the years 980—1001 A D (see Nanjio col 181, para 782) and into Tibetan (see Beckh 32A, para 4)

## 30.

1785 **कारण्डव्यूह ।** *Kāranda vyūha*

Substance Nepalese paper 11 × 3 inches Folia (?) Lines 6 on a page Character Newari Date N S 773 Appearance old a [illegible] Complete

*Colophon.*—आर्य्यकारण्डव्यूह महायानसूत्ररत्नराज समाप्तम् ।

*Post Colophon* —

ये धर्म्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत् तेषाञ्च यो निरोध एवं वादी महाश्रमण ॥ श्रीयोऽस्तु सम्वत् ७७१ सम्पूर्ण लिखित वशाख शुक्लपञ्चमि कुन्नु शुभलिखित श्रीवज्राचार्य्यबोध । इन कारण्डव्यूह . . श्रीमहाबुद्ध वज्राचार्य्य यात दानविया शुरो शुभ ।

## 31.

### 1725 कारण्डव्यूहम् । *Karandavyuha*

Substance seasoned palm leaf 13 × 1¼ inches Folia 7[illegible] of which fol. [illegible] 61 62 63 are restorations Lines 5 on a page Character Newari Date N S 515 Appearance old and discoloured Complete

The MS appears to have been restored and given away in N S 7[illegible] as there is a statement to that effect in an extra leaf

*Colophon* —आर्य्यकारण्डव्यूह महायानसूत्ररत्नराज समाप्तम् ।

ये धर्म्मा • । श्रेयोऽस्तु । सम्वत् ५१५ माघशुक्लतृतीयायां तिथौ पुनर्व्वसुनक्षत्रे सिद्धियोगे आदित्यवासरे सम्पूर्णदिने। दानपति श्रीललितक्रमायां श्रीमानीग्लस्थाने श्रीयुनेश्वरविहारमहाविहारनिवासि अभयमालभारोकस्य पुस्तकमिदं । राजाधिराजपरमेश्वरपरमभट्टारक श्रीश्रीजयस्थितिराजमल्लदेवस्य विजयराज्ये श्रीनेपालमण्डले । लिखितमिदं यपि विहालि + + + रामदत्तेन । शुभ ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
शुभमस्तु सर्व्वदा ।

## 32.

### 9975 कारण्डव्यूह । *Karandavyūha*

Substance unseasoned palm leaf 16 × 2 inches Folia 96 according to the pagination on the right hand side and 98 according to that on the left

Two leaves 20 and 46 are missing hence the difference Lines 5 4 on a page Character Newari Date N S 744 (Sagara yuga muni) Appearance dis coloured Complete

*Colophon* —आर्य्यकारण्डव्यूह नाममहायानसूत्रनत्नराज समाप्त।

*Post-Colophon statement* —

ये धर्म्मा *etc etc* सम्वत् सागरयुगमुनि सम्मताते वैशाख दिवश चष दिने अय ग्रन्थ थारकोविहारावस्थित श्वगिइश्वराचार्य्य सासुतवज्रनाम्ना धर्म्मसिद्धदेवेन लिखित इद ग्रन्थ गृहे प्रविष्टमात्रेण ये वाक्ता पुत्रधन्य वग्र व्याप्रारोग्ये कामनार्थ प्राप्तोक्त फलकामनार्थमनेन वाञ्छितसम्पूर्णकारणार्थं चर्चयोच स्वाध्यायीतव्या । शुभ ।

## 33.

10746

Substance seasoned palm leaf 12¼ × 2 inches Folia (by counting) 51 Lines 6 on a page Written in the Bengali character of the latter part of the XIIth century which well agrees with that of the last photograph of the third plate in Bendall's Cam Cat

It appears that the leaves were much longer than 12¼ inches, because it is clean cut at both the ends, cutting even the writing When the leaves were entire, there seems to have been two holes for the strings, one to the right and one to the left of the centre The leaves have been so cut that the portions of the right hand holes are still visible and a portion of the blank space round the hole is visible in every leaf Under the circumstances, it is difficult to describe the MS, which has *no beginning, no end, no colophons* and *no leaf marks* I have left the leaves as I found them and, to preserve the present arrangement, I have put down, in the blank round the left hand hole, Bengali numerals from 1—51.

That the book is a Buddhist Nyāya tract is apparent

Leaf 1st

Line 1 प्रतिषेध्याभावस्य व्यवहारयोग्यता वस्तुभूतैव प्रदेशस्य साध्यत इति न स्वभावहेतो स्वभावानुपलब्धिर्भिद्यत इति, यत्त्वनपेक्षितार्थान्तरसमर्ग-प्रतिषेधमात्रमनुपलब्ध —

Line 2 सर्व्वसामर्थ्यविरहलक्षणस्य साधनस्य सिद्धिहेतुत्व सिध्यति। सर्व्वसामर्थ्यविरहरूपस्य तदयोगात्। हेतुत्वे वा कथन्नु सामर्थ्ययोगिताभावरूपता वा सामर्थ्यलक्षणत्वाद्य

Leaf 1B

Line 8 मन्यभावस्तदभावो येनैवमभिधीयते। न चैतद्युज्यते भावाभावयोर्विरोधात एकात्मतानुपपत्तेरिति, कुमारिलोप्येव मन्यते, येय ग्राह्यज्ञेयधर्मीलक्ष

Leaf 6 A

Line 2 मतेनेत्यादि। कुमारिलस्य तु सलिलोपलम्भनिवृत्तिमात्र तुच्छरूपमभावप्रमाणतयाभिमतमेव। प्रत्यक्षादेरनुत्पत्ति प्रमाणाभाव उच्यते सात्मनो परिणामो वा विज्ञान वा—

Leaf 9B

Line 8 उच्यते तदा पटविविक्तप्रदेशज्ञान वा अनुपलब्धि नतु यथेश्वरसेनो मन्यते उपलब्ध्यभावमात्रमनुपलब्धिरिति वक्ष्यमाणदोषात, पटविविक्तप्रदेशस्वभावो

10A

Line 2 परमार्थतोऽप्येकत्वात् इतरस्य च अन्यत्वादिति। ननु चेश्वरसेनेन सह विचार प्रक्रान्त तत् किमिति नैयायिकाभिमतस्यापि सम्बन्धस्य अन्यभावतदभावयोरसम्भव उच्यते सत्य प्रसङ्गन तु त

14A

Line 3 + उपलब्ध्यभावमात्रमनुपलब्धिमभावस्य प्रसह्यप्रतिषेधात्मक प्रमाणान्तरत्वेन गमिकामिच्छन्ति ईश्वरसेनप्रभृतय अपरे तु प्रतिषेध्यविषय

14B

Line 8 शक्यते कर्तुं यदाह भाष्यकारो नानुमानत उपलभ्यमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुरिति, इन्द्रियत्वात वेगादिवन किञ्च प्राप्य कारित्वस्त्वनुमानतश्च।

25A

Line 6 प्रसङ्गात् क्षणिकतायामेव सत्वमिति यत् सत्तत्क्षणिकमेवेति सतो नश्वरात्मतासिद्धेरन्वयव्यतिरेकरूपव्याप्तिसिद्धिरिति। तदेवं स्वभावहेतौ तादात्म्यसिद्धि

42B

Line 4 विरुद्ध इति सम्बन्धः। यथाच यत्र किल दिङ्नागाचार्य्यस्यापि धर्म्मित्व इति परो दर्शयितुमाह। यथाह दिङ्नागाचार्य्य किमाह यदा तद्धर्म्मादि। श्रावणत्वस्य न च।

Line 5 वाच्यप्रसङ्गादिति तदाय श्रावणत्वसत्वात पक्षधर्म्मो हेतुरेव स्यात्। नित्य शब्द श्रावणत्वात् शब्दत्ववदिति। एव परेणोक्ते सति आचार्य्येणोक्त यदाण शब्दाख्ये धर्म्मिणि अनित्य .. ..

## 34.

### 1711 अपोहसिद्धि। Apohasiddhi

*By* RATNAKIRTI

Substance seasoned palm leaf 11 × 2 inches Folia 8 Lines 7 on a page Character, Bengali of the 12th century Appearance old discoloured and worm eaten Complete The right end of the leaves is mouse eaten

*Colophon* —कृतिरियं महापण्डितरत्नकीर्त्तिपादानाम्।

*Post Colophon statement* —

भवत्यपोहे कृतिना प्रपञ्चो
+ न्तु खल्वपास्फुरयन्तु मर्म्म।
तथापृते सर्व्वमयत्नधीगो
ऋते तु सौख्यं ननु तावतैव॥
सम्पूर्ण रात्रिप्रहरद्वयेन कोर्त्तेरपोहो लिखितः सुखेन।
त्रैलोक्यदत्तेन महामहेशोपेक्षादतोऽस्य परिरक्षणीय॥
शब्दैस्तावन्मुख्यमाख्यायतेऽर्थस्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैको ऽध्यासतो भासतोऽन्य स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्।

Printed in the Bibl. Ind. Series
Not in Nanjio, nor in the Bstan-Hygur.

## 35

### 1744 क्षणभङ्गसिद्धि । *Kṣaṇabhaṅgasiddhi.*

*By* RATNAKĪRTI

Substance seasoned palm leaf $11\frac{3}{4} \times 2\frac{1}{4}$ inches Folia (Part I Anvaya mukha) 1 to 11 of which the 4th is missing and (Part II Vyatirekamukha) 1 to 9 (incomplete) Lines 7 8 on a page Character Bengali of the twelfth century Appearance old and mouse eaten at the right hand side in consequence of which three or four letters in each line are lost

*The Colophon of Anvayamukha —*

पत्रपुस्तके दृष्ट्वा शुभमस्तु १०२७ आषाढ़कृष्णत्रयोदश्यां मङ्गल-
दिने सम्पूर्णम्मया लिखितम् ।

This is a work on the analysis of sentences, called Siddhabodha in Sanskrit, belonging to the Buddhist school

It begins —

ॐ नमः मङ्गलाय।

सुप्तिङन्तं पदं अत्र सुपिति स्वादयः सप्तविभक्तयो गृह्यन्ते, तत्र प्रथमा अपगता, प्रथमं प्रथमैव तावद्विचार्य्यते। का पुनरियं प्रथमा? स्वौजस इति प्रथमा। तस्याः पुनरेतत् लक्षणम्। प्रातिपदिकार्थलिङ्गपरिमाणवच[न]मात्रे प्रथमेति। तत्र प्राति पदिकार्थः सत्ता सत्ताद्वैतवादिनामेतद्दर्शनम्। सत्ता प्रातिपदिकार्थ इति तथाच तेषां दर्शनम्। सत्ता नाम काचिदनादिनिधनरूपा नित्यतया व्यवस्थिता सर्व्वैं शब्दैरभिधीयते तदुक्तम्

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्या[ं] सर्व्वशब्दा व्यवस्थिताः॥
प्राप्तक्रमविशेषेषु क्रिया सैवाभिधीयते।
क्रमरूपस्य संहार[ ]तत् सत्त्वमिति चोच्यते॥
अतस्तौ प्रातिपदिकार्थ धात्वर्थे च प्रवर्त्तते
सा नित्या सा महानात्मा तामाहु + तत्वादय॥

यद्येवमभावप्रध्वंसप्रागभावादिशब्देभ्य प्रथमा न प्राप्नोति तेषामभाववाचकत्वेन सत्ताया अभावात् नष्टो घट इत्यादौ च प्रथमा न स्यात् नष्टस्य सत्ताया अभावात्। अङ्कुरो जायते इत्यादौ च प्रथमा न स्यात् सतो जन्माभावात्। अत्रोच्यते। नेह वस्तु सत्ताभिप्रेता। का तर्हि? अभिधेयसत्ता

The original being worm eaten this manuscript is full of lacunæ.

It describes the meanings of cases, vibhaktis or case endings and so on

It ends —

अत्रोच्यते यथा क्रियया यानि कारकाणि सम्बध्यन्ते, तत्क्रियासम्बन्धात् एव तेषामपि परस्परसम्बन्धात् + दोष (?) परमत विषय एकक्रिया पूर्वकत्वेन सम्बन्ध इति पारम्पर्येण व्यवस्थितः सम्बन्धः क्रियया तु साक्षा दिति। तदुक्तं। साक्षात्क्रियस्तु सम्बन्ध कारकाणां क्रियाकृत

क्रियायाः कारकैरेव साक्षादेवोऽभिधीयते।

Not in Nanjio

## 37.

10751 **सुगतजन्मरत्नावदानमाला ।** *Sugatajanmaratnāvadānamālā*

Substance Nepalese paper 17 × 3½ inches Folia 108 (by counting) of which the 12th is missing Lines 8 per page Character modern Newari Appearance new

The MS is very defective Between the second leaf and the next leaf now marked 3rd there is a long gap There is another gap between the leaves now marked 5 and 6, and a third is between the leaves now marked 91 and 92 A former owner of the MS, in order to make it appear to be complete, obliterated the original leaf marks and put new ones, from the leaf now marked 3 to the end In the 3rd leaf we have the colophon of the 21st chapter and that of the 26th in leaf 18B

It goes over the same ground as the Lalitavistara but it is in verse and is in the form of an *avadāna*

*Colophons —*

3B, इति (श्रीललितविस्तरे ? added by a different and a later hand) पुराभिनिष्क्रमणपरिवर्त्तो नामैकविंशतितमोऽध्याय समाप्त, 18B इति भगवतो दुष्करव्रतचर्यापरिवर्त्तो नाम षड्विंशतितमोऽध्याय, 19B, इति बोधिसत्त्वव्रताभिप्रायनभोजनाहरणपरिवर्त्तो नाम सप्तविंशतितमोऽध्याय, 26B, इति बोधिसत्त्वाभिगमनपरिवर्त्तो नाम अष्टाविंशतितमोऽध्याय समाप्त, 33B, इति बोधिसत्त्वसर्व्वलोकपूजाभिगमनमहाव्यूहपरिवर्त्तो नाम एकोनत्रिंशत्तमोऽध्याय, 58B, इति मारधर्षणपरिवर्त्तो नाम त्रिंशतितमोऽध्याय, 59B, इत्यभिसम्बोधनपरिवर्त्तो नाम एकत्रिंशत्तमोऽध्याय, 65A, इति सन्तवदपरिवर्त्तो नाम द्वात्रिंशत्तमोऽध्यायः, 100B, इति धर्म्मचक्रप्रवर्त्तनपरिवर्त्तो नाम पञ्चत्रिंशत्तमोऽध्याय समाप्त, 104B, इति सम्बुद्धजन्मस्थानमहायात्रासूत्रभाषणश्रद्धादिपुण्यप्रसङ्गपरिवर्त्तो नाम षट्त्रिंशत्तमोऽध्याय, (Last colophon) इति

सुगतजन्मरत्नावदानमालायामानन्दबोधिचर्य्यावनसधारणपरिवर्त्तो नाम सप्तत्रिंश
दध्याय समाप्तः।

*Post Colophon* —

शुभमस्तु जगतां सदा ।

Then there are seven lines of Āśīrvada and phalaśruti

*The work begins* —

ॐ नमः श्रीरत्नत्रयाय सर्व्वबुद्धबोधिसत्त्वेभ्यो नमः ।
यो भगवान् महाबुद्धः पश्यन् पाति सदा जगत् ।
जयन्तु शासनान्यस्य सर्व्वलोकेषु सर्व्वदा ॥
या श्रीप्रज्ञा महादेवी भद्रश्रीः सद्गुणाकरी ।
सद्धर्म्मसाधनोत्साहं दत्त्वा लोकान् सदावतु ॥
ये जगद्धर्म्मभर्त्तारो बोधिसत्त्वा जिनात्मजाः ।
ते सर्व्वे सर्व्वलोकानां भद्रं कुर्व्वन्तु सर्व्वदा ॥
त्रिरत्नशरणासीनो महाबुद्धानुभावतः ।
वक्ष्यामि त्रिशताष्टकात्सुबुद्धजन्मावदानकम् ॥
तत् सन्तो ये महासत्त्वाः सम्बुद्धगुणलालसाः ।
ते सर्व्वे श्रद्धया भक्त्या शृणुध्वं बोधिसाधनम् ॥
तद्यथा भगवान् बुद्धः शाक्यसिंहो मुनीश्वरः ।
श्रावस्त्यां जेतकारण्ये विजहार ससाङ्घिकः ॥
भिक्षुद्वादशसाहस्रैः सार्द्धं तत्र जगद्धितम् ।
सद्धर्म्मं समुपाख्यातुं सभासने समाश्रयत् ॥
तद्दृष्ट्वा सांघिकाः सर्व्वे आनन्दप्रमुखा मुदा ।
तत् सद्धर्म्मसुधां पातुमुपाचरन् प्रसादिताः ॥
तथा सन्तो महासत्त्वाः बोधिसत्त्वाः शुभार्थिनः ।
सद्धर्म्मसाधनोत्साहाः समाययुः प्रहर्षिताः ॥
श्रावका भिक्षवोऽर्हन्तो यतयो ब्रह्मचारिणः ।
योगिनश्चैलकाश्चापि तथान्ये चाप्युपासकाः ॥
भिक्षुण्यो ब्रह्मचारिण्यश्चैलिकाश्चाप्युपासिकाः ।
एवमन्येऽपि लोकाश्च ब्राह्मणाः क्षत्रियोऽपि च ॥

राजानो राजपुत्राश्च वैश्याश्च मन्त्रिणो जना ।
अमात्याः श्रेष्ठिनो भृत्या योद्धृसैन्याधिपा अपि ॥

.. ... . .. .

.. .

2A. सर्व्वे ते समुपागत्य समीक्ष्य तं मुनीश्वरम् ।
सभामध्यसमासीनं प्रणत्वा समुपाचरन् ॥
तत्र सर्व्वेऽपि ते लोकाः समुपेत्य समादरात्
यथाविधि समभ्यर्च्य साञ्जल्य प्रणेमिरे ॥

.

तान् सर्व्वान् समुपासीनान् दृष्ट्वा स भगवान् जिनः ।
आर्य्यसत्यं समारभ्य सद्धर्म्मं समुपादिशत् ॥
तत् सद्धर्म्मामृतं पीत्वा सर्व्वलोकाः प्रबोधिताः ।
सद्धर्म्मसाधनोत्साहं समास्थायाभिनन्दिरे ॥
तत सर्व्वेऽपि लोकास्ते श्रीघनस्य महामुने
बुद्धजन्मावदानञ्च सम्श्रोतुमभिलेषिरे ।

## 38.

## 1700 अपरिमितायुर्नाम महायानसूत्र । *Aparimitāyur nāma mahāyānasūtra*

Substance Nepalese [illegible] paper. 14 x [illegible] inches. [illegible] lines on a page. Extent in slokas 300. Character Newari of the [illegible] century. Appearance fresh. Complete.

*Colophon* —आर्य्य महा अपरिमिताय् नाम महायानसूत्र समाप्त

*Post Colophon* —शुभमङ्गल भवन्तु सर्व्वदा कल्याण भवन्तु । वज्राचार्य्य धर्म्मदेवोनघवता नामन दयका शुरो । शुभ ।

*Beginning* —

ॐ नमो रत्नत्रयाय ।

एवं मया श्रुतमेकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवने अनाथपिण्डदस्यारामे महता भिक्षुसङ्घेन सार्द्धमर्द्धत्रयो-

दशभिर्भिक्षुशतैः सार्द्धमर्द्धत्रयोदशैः संबहुलैश्च बोधिसत्त्वै महा-
सत्त्वै। तत्र खलु भगवान् मञ्जुश्रीय कुमारभूतमामन्त्रयते स्म।
अस्ति मञ्जुश्री भूपरिस्था दिशि, अपरिमिता दिशि गुणसञ्चयो
नाम लोकधातु, तत्रापरिमितायु ज्ञानसुविनिश्चिततेजोराजानाम
तथागतोऽर्हन्त सम्यक्सम्बुद्धविद्याचरणसम्पन्नसुगतो लोकवित्
अनुत्तर, पुरुषदम्यसारथि शास्ता देवानां मनुष्याणां बुद्धो भगवान्
एतर्हि तिष्ठति ध्रियन्ते ज्ञोपयन्ति सत्त्वानां च धर्म्मं देशयति।
शृणु मञ्जुश्रीकुमारभूत इम जम्बुद्विपका मनुष्या अल्पायुषो वर्ष
शतायुष भविष्यति। तेषां बहूनि न कालि मरणानि दृष्टानि।
ये खलु पुनर्मञ्जुश्रीय सत्वापरिमितायुषस तथागतस्य गुणवर्ण-
परिकित्तन नाम धर्म्मपर्य्याय लिखिष्यन्ति लिखापयिष्यन्ति नाम-
धेयमात्रमपि श्रोष्यन्ति धारयिष्यन्ति वाचयिष्यन्ति यावत्
पुस्तकगतामपि कृत्वा गृहे धारयिष्यन्ति पुष्पधूपदिपगन्धमाल्य
विलेपनचूर्णचिवरच्छत्रध्वजघण्टापताकादिभि पूजयिष्यन्ति ते
परिक्षीणायुष पुनरपि वर्षशतायुषा भविष्यन्ति।

5B तेन खलु पुन समयेन गङ्गानदीवालुकोपमानां बुद्धकोटीनां
एकमतेनैकस्वरेण इदमपरिमितायुसूत्र भाषितम्। ॐ नमो
भगवते अपरिमितायु ज्ञानसुविनिश्चिततेजोराजाय तथागता-
याहत सम्यक्सम्बुद्धाय तद्यथा ॐ पुण्यपुण्य महापुण्य अपरि-
मितपुण्य अपरिमितायुपुण्य ज्ञानसम्भारोपचिते ॐ सर्व्वसंस्कार-
परिशुद्धे धर्म्मतथागतसमुद्गते स्वभावविशुद्धे महानयपरिवारे
स्वाहा।

For a Chinese translation see Nanjio, Col 21, para 27, and for a Tibetan translation see Beckh, p 122, para 75, also p 189, para 5

Tibetan translations of several commentaries are mentioned in Cordiery, pp 283 284

See Bendall's Cam Cat, p 39, in which it is stated, "If this be the work referred to in Beal's Bud Trip, p 16, the sūtra was translated into Chinese before 1278 A D"

After the Aparimitāyurmahāyānasūttra, which ends in 12 A, *there is another short work, named Manasīpūja*, added in a later hand of which we give the whole text below —

दद्यामि चात्मानमहं जिनेभ्यः
सर्व्वैश्च सर्व्वैश्च ददाम्यहेभ्यः ।
परिग्रहं मे कुरुतायसत्त्वा
युष्मासु दासत्वमुपैमि भक्त्या ॥
परिग्रहैणास्मि भवत्कृतेन
निर्भ्भवे सर्व्वहितं करोमि ।
पूर्व्वञ्च पापं समतिक्रमामि
नान्यच्च पापं प्रकरोमि भूय ॥
इति मानसी पूजा समाप्ता ॥

## 39.

1716 **आर्य्यापरिमितायुर्नाम महायानसूत्र ।** *Aryaparimitayurnama mahayanasutra*

Substance seasoned palm leaf 12 × 2 inches Folia 6 Lines, 6 on a page Character Kutila Appearance, old and discoloured Leaves 5B 8B and 9A contain faded illustrations

The leaves are marked 3, 4, 5, 7, 8, 9

*The third leaf begins* —अपरिमितायुःसूत्र भाषितम् ।

ॐ नमो भगवते अपरिमितायुर्ज्ञानसुविनिश्चित तेजोराजाय .

etc etc etc

The same mantra as quoted under No 38

## 40.

10781 **अपरिमितायुर्नाम महायानसूत्रम् ।** *Aparimitayurnama mahayanasutra*

Substance, Nepalese paper with black ground Written in Silver Folia 25 Lines 5 on a page Character ornamental Newari Date N S 760 Appearance, old Complete

*The last Colophon* —

आर्य्यापरिमितायुर्नाम महायानसूत्र समाप्तम् । ये धर्म्मा इत्यादि ।
देयधर्म्मोऽयं प्रवरमहायानयायिन परमोपासकशाक्यभिक्षुश्री-

त्रिभुवनरत्नस्य यदत्र पुण्यं तद्भवत्वाचार्य्योपाध्यायमातापितृपूर्व्वङ्गमं कृत्वा सकलसत्त्वराशेरनुत्तरज्ञानमोत्तमफलं प्राप्नुयोऽस्तु ।

महाराजाधिराजपरमेश्वरपरमभट्टारकश्रीजयजगज्योतिमल्लसिंहमल्लदेव, तस्य पौत्र श्रीर पट्टायमल्लदेव पुत्र ठाकुरस्य विजयराज्य दानपति कीर्त्ति-पुण्य महाविहाराधिष्ठितखाड़ाच्छन्नाक्यभिक्षु श्रीत्रिभुवनरत्नस्य भार्य्यापुत्रपुत्री समायपरिवारस्य न+ अपरिमितपुस्तकपोथका जुरो । श्रेयोऽस्तु ।

• संवत् ७६० मार्ग्ग शुक्ल दशमि तिथि बृहस्पतिवारे सुदिन कुन्हु संपूर्णजुरो । लिखितेयं तत्तुमुरमहाविहाराधिष्ठितवज्राचार्य्यश्रीरत्नत्रयस्य पुत्र महायान++वज्राचार्य्य श्रीधर्मसिंहदेवेन लिखितं संपूर्णमिति ।

यथादृष्टं तथा लिखित इत्यादि ।

शुभमंगलं भवतु ॥

## 41.

### 1716 आर्य्यदुर्गतिधारणीपरिसूत्र । *Aryadurgatidhāraṇī-parisūttha*

Substance Nepalese paper 14 x 4 inches Folia 7, numbered 84—90 Lines 6 on a page Character, Newari Date N S 845=1725 A D Appearance good Complete

This is a very short work, calling itself a Mahāyāna sūttra, of which the next number, a much bigger work, is evidently an amplification It gives simply a number of *mantras* which are credited with the power of bringing relief to suffering humanity

It agrees with the next number (see below) up to the mantras under the heading of Vajrasphota mantras, the last of which is numbered 28 (समस्तभद्राय स्वाहा) ।

Then it goes on.

89A अनेन देवेन्द्र महास्थानसूत्रं सर्व्वदुर्गतिविध्वंसना महायानसूत्रं यो धारय वाचयेत् ... ... [स] सुखावतिमनुगच्छति ... ... ...

Then follow three more mantras with the colophon,

अनेन दुर्गतिधारणि गाथा ।

Then comes the phalasruti.

अण्डजा वा जरायुजा वा स्वेदजा वा ... .. ... ... ...
... ... .. ... सर्व्वदुर्गति + + सुखावया मेवापात् ।

ॐ मुनि मुनि महामुनि स्वाहा
नमस्ते शाक्यसिंहाय धर्म्मचक्रप्रवर्त्तिने ।
त्रिधातुकम्पिते सर्व्वं शोधय सर्व्वदुर्गति ॥

मार्गशोधन मुद्रा—

इदमवोचद्भगवानात्तमना स्तेच भिक्षवो भगवतो भाषितमभ्यनन्दमिति ॥

Then comes the Colophon.

*Colophon* :—आर्य्यदुर्गतिधारणिपरिसूत्र समाप्त ।

*Post-Col.* :—ये धर्म्मा ( इत्यादि )

शुभमस्तु सर्व्वदा कल्याणं भवन्तु । सम्वत् (संवत्) ८७५ फाल्गुनकृष्ण[त्रयो]दश्यायां तिथौ शतभिषनक्षत्रे शुभयोगे अथाकम मुहूर्ते बृहस्पतिवासरे मीनराशिगते सवितलि कुम्भराशि चन्द्रमसि थ्वकुनु दिन कुन्हु चोयसिधयका जुरो शुभ ।

## 42.

4848. **सर्व्वदुर्गतिपरिशोधन ।** *Sarvadurgati pariśodhan.*

Substance, Nepalese paper 14 × 4 inches Folia, 9 to 83 Lines, 6 on a page Character, Newari Date, N S 873 Appearance, old and discoloured Although the leaves are numbered 9—83 the MS is complete

For the work see Bendall's Cam. Cat , pp. 78, 79, 81, 94, 142. *For a Tibetan translation see Beckh, p. 91B, para* 2 ; p. 92, para. 4.

12B, अथ खलु भगवान् शक्रब्रह्मादिदेवपुत्राणां सर्व्वतथागतहृदयाना धिष्ठानार्थममोघवज्राधिष्ठानं नाम समाधिसमापन्ना ॥ ॐ वज्राधिष्ठान समय ॐ ... ... ... ... ... ... ... सर्व्वदुर्गतिपरिशोधनराजं नाम तथागतहृदयानिश्चारयेत् ॥ ॐ शोधन २ सर्व्वपापविशोधनि + +, सर्व्वकर्म्मावरण विशुद्धेस्वाहा ॥ अस्या विद्याया भाषणानन्तरमेव सर्व्वसत्वान् दुर्गति

विलियाति पुनरपर देवेन्द्र इद सर्व्वतथागतहृदय

ॐ सर्व्वापायविशोधनि ॐ फट 18A, लास्याया मन्त्र मालाया मन्त्र, गीताया मन्त्र, नृत्याया मन्त्र, 18B, धूपाया मन्त्र, पुष्पाया मन्त्र दिवाया मन्त्र, गन्धाया मन्त्र, वज्राङ्कुश मन्त्र, वज्रपाश मन्त्र, वज्रस्फोट मन्त्र, वज्रवेशस्य मन्त्र

15A अथ देवेन्द्रो भगवन्त प्रयत् प्रदक्षिणीकृत्य वन्दित्वैवमाह। भगवान् सर्व्वदुर्गतिविनिभूतानां हिताय सुखाकारनाय यथा सर्व्वे सर्व्वदुर्गति एधि करनाया अथ खलु भगवान् शाक्यमुनि सर्व्वदुर्गति परिशोधनज्ञानवज्र नाम समाधि समापद्य सर्व्वतथागतदुर्गतिपरिशोधनतनो राजा नाम मण्डर भावयत् प्रथम तावत् योगी विजन मनोऽनुकूले प्रदेशे मृदुकुसुमासासने (सुकुमारासने ?) निसन्न सुगन्धमण्डलक कृत्वा यथोपहारपूजा कारयित्वा तत सर्व्वधर्म्मनैरात्मां भावयित्वा आकाश ऊकारेण वज्रज्वाराक भावयेत् तस्य कर्णे गौवकारेण पद्म तस्योपरि दराद्रि आकारेन चन्द्रमण्डल तस्योपरि ऊकारेण पञ्चसुचिकवज्र तद्वज्र जिह्वाया हिम भवति वज्रजिह्वेति तेन जिह्वा भवति मन्त्रजापक्षमो भवति। etc etc

77B ततः स्वय वज्राचार्य्य वज्र शिष्यमूर्द्धि स्थाप्य एव वदेत् अद्य ते समयो वज्र etc

Colophon —82B आर्य्य सर्व्वदुर्गतिपरिशोधनराजोराजस्य तथा

*गतस्यार्हतः सम्यक्सम्बुद्धस्य कल्पैकदेश समाप्त।*

ये धर्म्मा हेतुप्रभवा (इत्यादि)

देय धर्मोय प्रवरमहायानयायिन परमोपासक परमधार्म्मिक धमात्मा वज्राचार्य्य श्रीधर्म्मदेवप्रमुखादिसमनाया। यदत्र पुन्य (इत्यादि)।

स्वस्ति। श्रीमत् पशुपतिरप्रत्यादि रघुकुलेत्यन्न महाराजाधिराजरविवंशो[द्]-भवश्रीश्रीजयरत्नजिसमल्लदेवदेवानां सदासमरविजयिनां प्रभुठाकुरस्य विजयराज्य।

हामपति श्रीमल्लापुरमहानगरस्थाने श्रीपशुपतिमहाविहारेस्थित श्रीदेवता लोके स्वस्वरनधर्म्मापितावज्राचार्य्य पुनदेवस्य भार्य्या

इद सर्व्वदुर्गतिपरिशोधनपुस्तक लिखितवान्।

एतत् पुण्यानुभावेन जजमानस्य सगनपरिवाराणां

स्थिरस्तु। ... ... ... ... शुभ सम्वत् ८७३ आषाढमास्य शुक्लपक्ष एकादश्याया तिथौ अनुराधनक्षत्रे। शुक्रमजोगे यथाकममुहूर्त्ते बुधवासरे कर्कराशि सवितरी। विष्णुराशि चन्द्रमसि। एतद्दिने लिखितं सम्पूर्णमिति ॥

यादृशं पुस्तकं दृष्टा etc., etc.

Then there are four leaves marked 91 to 94, written mostly in the Newari language

There is one more of a shorter size, containing the beginning of some other work, with space for an illustration.

## 43.

**1836 वसुधारानामधारणीपरिसूत्र ।** *Vasudhārā nāmadhāraṇīparisutra.*

Substance, Nepalese yellow paper 10 × 2½ inches Folia 30 Lines, 5 on a page Extent in ślokas, 400 Character Newari Date N S 814 Appearance discoloured Complete

*Colophon* :—

आर्य्यश्रीवसुधारानामधारणीपरिसूत्र समाप्त।

*Post-Colophon* —

ये धर्म्मा हेतुप्रभवा. etc संवत् ८१४ चैत्रमस्यशुक्लपक्ष प्रतिपद्याया तिथे रेवतिनक्षत्रयोगे यथाकमसाभरे शुक्रवासरे मिनराशिगते सवितरि मेषराशि चन्द्रमसि।

लिखिति श्रीवज्राचार्य्यं धर्म्मदेव यवनादयका पुथिचोय धुनकादिन जुरो ॥ शुभमस्तु सर्व्वदा। यथादृष्टं तथालिखितं लेखको नास्ति दोष.। See below.

## 44.

10757.

*Three batches of seasoned palm-leaves, all written in the Newari character of the 14th century*

I

11 × 2½ Folia, 17, of which the 5th and 12th are missing Lines 7 on a page Appearance soiled

*Beginning* —

श्री भगवत्यै आर्य्यवसुधारायै

कल्पोदितेन विधिना परिपठ्यमाना

या धारयन्ति विविधरत्नसुवर्णमय्या ।

पूर्णं करोति भवन सहसैव सर्व्वं

ता सर्व्वलोकजननी प्रणमामि भक्त्या ॥

त्व देवि सर्व्वगुणरत्नमहानिधान

सत्त्वार्थकार्य्यधनधान्यसमृद्धिहेतो ।

हाराद्धहारमुक्तामणिकल्पवृक्षा

त्रैलोक्यनाथसुधा वसुधार नामा ।

एवम्मया श्रुतमेकस्मिन् समये भगवान् कौशाम्ब्या महानगर्यां विहरति स्म

तत्र खलु भगवान सर्व्वदारिद्र्य् खाराकपरि

घोषण नाम धर्म्मपर्य्याय देशयति स्म ।

आदौ कल्याण मध्ये कल्याण पर्य्यवसाने कल्याण स्वर्थ सुव्यञ्जन केवल परि

पूर्णं परिशुद्ध पर्य्यवदात ब्रह्मचर्य्य सप्रकाशयति स्म

## 45

10767 II

11×2 le Io — 1 of 1 l tl l h l t lo l—17t n
So l l W l l e o a page Copcl N S 1 9= 1309

*Colophon* —

इति आर्य्यश्रीवसुधारा नाम धारणी समाप्ता ।

*Post Colophon statement* —

ये धर्म्मा etc etc

देयधर्म्मोय प्रवरमहायानयायिन परमोपासक श्रीश्रीललित

द्रमायां श्रीमाणीगलोत्तरमहाविहारे वगारच्छ अधिवासित

राजकनककारजौतना रोकस्य यदत्र पुण्य तद्भवत्वाचार्य्योपाध्याय

मातापितृपूर्व्वङ्गम कृत्वा सकलसत्त्वराशेरनुत्तरफलप्राप्तमिति

राजाधिराजपरमेश्वरपरमभट्टारकश्रीश्रीजयार्जुनदेवस्य विजय

राज्ये । [अपोऽस्तु । संवत् ८८८ चैत्रशुक्लद्वादश्यां परत्रयोदश्यां पूर्व्वफाल्गुणीपरे उत्तरफाल्गुणीनक्षत्रे वृद्धियोगपरे ध्रुवयोगे बुध वारे लिखितमिदं सद्धर्म्मपुस्तकम् ।

श्रीयोल्यखंबहालाच्छ्रवास्तव्य वज्राचार्य्यश्रीज्ञानसमतिना लिखितम् । शुभमस्तु ।

There is one stray leaf, with writing much effaced.

## 46.

10785 **सर्व्वतथागतोष्णीष सितातपत्रोनामापराजिता महाप्रत्यंगिरा विद्या राज्ञी ।** *Sarva tathāgatoṣṇīṣa-sitātapatronāmāparājitā mahā pratyaṃgirā vidyā rājñī.*

Substance Nepalese black paper Written alternately in gold and silver Folia 22 marked in letter numerals Lines 5 on a page Character Newari Date, N S 933 Appearance old Complete With an illustration in the first leaf

21A आर्य्यसर्व्वतथागतोष्णीषसितातपत्रोनामापराजितामहाप्रत्यंगिराविद्या राज्ञी समाप्त ।

Then there is a short Dhāranī entitled (22A) आर्य्यविलो कितेश्वरस्य अभयकरि नाम धारणी ।

*Post-Colophon —*

ये धर्म्मा इत्यादि ।

संवत् ९३३ मिति ज्येष्ठ शुक्ल ४ सपूर्ण चरित मया दानपति कार्यसाधन कृति . . . . The other side of the leaf is completely faded

## 47.

9987. **षण्मुखी नामधारणी ।** *Sanmukhīnāma dhāranī*

Substance seasoned palm leaf 12"×2" Folia 4 Lines 5 on a page Character Newari of the 14th century Appearance, old and soiled There are holes on the right and on the left of the centre

A Tibetan translation of a comm is known from Cord., p 297

1 नमो बुद्धाय ।

न दिवि भुवि वा नास्मिल्लोके न वैश्रवणालये
न भवभुवने दिव्यस्थाने न दिक्षु[वि]दिक्षु वा ।
भरतु वसुधां स्फीतां कृत्स्ना समर्थैककारका
पुरुषवृषभकल्पस्तुल्योऽन्यो महाश्रमण कुत ॥

एक गाथा ।

सर्व्वबुद्धान् नमस्यामि जिनानप्रतिपुद्गलान् ।
शरीराणि च सर्व्वेषां सबुद्धानां यशस्विना ॥
जायन्ते यत्र सबुद्धा बोधिं यत्र स्पृशन्ति च ।
प्रवर्त्तयन्ति शिव चक्र परिनिर्वान्त्यनास्रवा ॥
यत्र स्थिताश्च + + + + + + श्च तथागता ।
कल्पिता सिंहशय्याश्च तान् देशान् प्रणमाम्यहं ॥
ऊर्द्ध तिर्य्यगधस्ताच्च (स्वस्तात्) दिशासु विदिशासु च ।
सशरीराऽशरीरेषु स्तूपेषु प्रणमाम्यहम् ।
पूर्व्वोत्तरे दिशो भागे तिष्ठते द्विपदोत्तम ।
जिनो दुष्प्रसहो नाम तेनेमा गाथ भाषिता ॥
याभिश्चतसृभिर्गाथाभि 2 र्ये स्तुवन्ति तथा गतान्
कल्पकोटिसहस्रेभि र्न ते गच्छन्ति दुर्गतिम् ॥

चतुर्गाथा ।

बुद्धे धर्म्मेऽथवा कौसीद्य मुष्टिरल्पमात्रेण ।
रागे माने चरित कौकृत्य चानियतभेद ॥
सत्वानामावरण तत्प्रतिपक्षोऽप्रयाणसभाषा ।
सर्व्वान्तरायदोषप्रहाणमेषा तथा भवति ॥

तद्यथा ।

ॐ वज्रप्राकारा वज्रप्राकारा वज्रचक्रदृढा
भयानके चमले विमले निमले
चले चुले चुलुके चुलुके चुलु चुलु बुद्धे स्वाहा ।
यो ब्राह्मणोऽर्थितो वा गाथाद्वयधारणी प्रयुञ्जीत ।

सहि दशविधमनुशंसं लभते सत्त्वोत्तमो धीमान् ॥
तत्त्वा च धातुपुष्टिं प्रामोद्यं चोत्तमं मरणकाले ।
जन्म च यथाभिकामं जातिस्मरणता च सत्त्वेव ॥
बुद्धैश्च समवधानं तेभ्य श्रवणं यथायथानस्याधिमुक्तिं ॥
सह बुद्धादय 2A. सुखतामासु बोधिस्व ॥
स्वयं हि गच्छन्ति महानिधाना राजाग्निचौरोदकविप्रलब्धा. ।
श्रुतं निधानं हि तथागतानां अविप्रनाश्य बहुकल्पकोटिभि ॥
संघेऽप्रमादो ह्यमृतस्य मूलं
सत्त्वार्थयुक्तस्य च बोधिचित्तम् ।
यथोनिशश्चैव विवेकचित्त-
मपरिग्रहः सर्व्वसुखस्य मूलम् ॥ गाथाद्वय ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् शुद्धावासोपरि गगनतलप्रतिष्ठिते सप्तरत्नप्रविभक्तचित्ररत्नव्यूहे महामण्डलमाडे विहरति स्म असंख्येयेन बोधिसत्त्वगणेन सार्द्धं । तत्र खलु भगवान् बोधिसत्त्वानामन्त्रयते स्म । उद्गृह्णीध्वं यूयं कुलपुत्रा इमां षण्मुखीं नाम धारणीं सर्व्वजगद्धितसुखार्थे । तद्यथेदम् । संसारे संसरतो यो मे कश्चित् दुःखानुभव समानुभूतमेऽ 3 सत्त्वसमताऽप्रतिसम्विदितलक्षणा. यत्र मे कश्चित् लौकिकसम्पत्तिसुखानुभव स भवतु सर्व्वसाधारणपरिभाग' यत्र मे किञ्चित् पापकर्म कुशलमूलं कर्म्मावरणं तम्माभूदप्रतिदेशनानुसरया प्रतिदेशनया यानि च मे मारकर्म्माणि तानि मा भूवन्नपरिज्ञातान्यनुसरया परिज्ञया . ... ...

.. . ...

3B आर्य्यषण्मुखी नाम धारणी समाप्ता ।

The rest of the MS is taken up with a number of Gāthās, uttered by Samantabhadra Bodhisattva, in mixed Sanskrit. The MS ends in the middle of a verse

## 48.

10711.

D A number of Dhāranis with illustrations

Substance Nepalese paper. Character Newari, [illegible] hand. Folia 11+2.

I. Complete in eleven leaves; the rest separately paged, being in 22 leaves

*Colophon* —

11B. आर्य्यग्रहमातृका नाम धारणी समाप्त ।

II 4A इति श्रीवसुधारया नामाष्टोत्तरशतं बुद्धभाषित समाप्त ।

III 8A आर्य्यवज्रविदारणहृदयमन्त्रधारणी समाप्त ।

IV 11A आर्य्यश्रीगणपतिहृदयनामधारणी समाप्त ।

V 15A. आर्य्यउष्णीषविजया नाम धारणी परिसमाप्त ।

VI 17A आर्य्यापर्णशवरीधारणी समाप्त ।

VII 19B. आर्य्यमारीचि नाम धारणी समाप्त ।

VIII .

इति श्री आर्य्यग्रहमातृका नाम धारणि समाप्त ।

*Post Colophon Statement* —

ये धर्म्मात्यादि । शुभ

## 49.

### 8830 बोधिचर्य्यावतार पञ्जिका । (*Bodhicaryāvatāra Pañjikā*)

*By* PANDITA BHIKSU PRAJÑĀKARAMATI

The MS has been lent to Professor Louis de la Vallee Poussin of Ghent but owing to the war, the MS cannot be obtained for the purpose of cataloguing. The following description of the manuscript is given from my paper entitled — *On a new find of old Nepalese manuscripts* in pp 245-249 J A S B 1894

Substance palm leaf Character, Newari Date N S 198=1078 A D In good state of preservation With the first leaf and 2[?] others missing

*Colophon* —बोधिचर्य्यावतारे प्रज्ञापारमितापरिच्छेदटीका समाप्ता ।

कृतिरियं पण्डितभिक्षुप्रज्ञाकरमतेः ।

*Post Colophon* —

टीकेयं परमा सुयन्त्रितपदा शुद्धा मनोह्लादिनी
संसारार्णवपारगामिनि जने नौयानयानोपमा ।
व्याप्तुप्राप्तिकरी जिनस्य पदवी सद्योल्लिखिता मया
प्राप्तं यत् कुशलं सुसम्पदि पदं तेनास्तु बुद्धोजनः ॥
चत्वारिंशतिसंयुक्ते षट्शते सम्वति वत्सरे ।
कृष्णे श्रावणपञ्चम्यां वासरे कुजसाह्वये ॥
श्रीमच्छङ्करदेवस्य राज्ञो विजयशालिनः ।
बोधिचर्य्यावतारस्य टीका लिख्यामिदं शुभम् ॥
श्रीललितपुरे रम्ये श्रीमानीगलकसंज्ञके ।
यच्छ्रीराघवनाम्नस्य विहारे सुगतालये ॥
धन्यस्थविरभिक्षोस्य बुद्धचन्द्रस्य पुस्तकं ।
तत्पुण्याद्बोधिसत्त्वत्वं लभते परमं पदं ॥ इति ॥
विस्तृजतु सलिलं घनो यथेष्टं भवतु मही बहुशस्यसम्प्रयुक्ता ।
भवतु नरपतिः प्रजा विनम्रा भवतु वयमपि सुखाभिवृद्धिः ॥ इति
कायस्थ भुवनाकरणेन लिखितमिति ॥

## 50

9979 **बोधिचर्य्यावतार ।** *Bodhicaryāvatāra and the Pañjikā commentary*

*B*y Śāntideva

Four seasoned palm leaves 20 × 2 Written in old Newari Character

I Bodhicaryāvatāra with six lines on a page, faded, containing the colophon —

बोधिचर्य्यावतारे ध्यानपारमिताऽष्टमः परिच्छेदः ।

II Two leaves with five lines on a page—one is marked on the left-hand side चय ६ = 127—the other without leaf mark contains the colophon बोधिचर्य्यावतारपञ्जिकायां ध्यानपारमिता परिच्छेदोऽष्टम ।

III The fourth leaf is written in a smaller hand with five lines, and on one side only. It quotes the following *matikas*—एका पितेत्यादि, सत्त्वं रजः इत्यादि ।

## 51.

3820 **बोधिचर्य्यावतारटीका ।** *Bodhicaryāvatāra-ṭīkā*

*By* PRAJÑĀKARAMATI

(The ninth or the Prajñāpāramitā Section only)

Substance, palm leaf 12 × 2 inches Folio 100 Lines 6 on a page Extent in slokas 2725 Character Bengali of the 12th century Appearance fresh but worm eaten in places Complete Written in a neat and small hand

*Colophon* —

बोधिचर्य्यावतारे प्रज्ञापारमितापरिच्छेदटीका समाप्ता । कृतिरियं पण्डितभिक्षु प्रज्ञाकरमतिपादानाम् ।

*Post Colophon* —

लिखापितेयमनवधिगुणगणविविधरत्नराशिपरिख्यातगम्भीरपयः प्रतानजलसागरैः सोमकर्म्मविषयपरिकलितगगनतलनिपयोऽस्मा- ज्ञातसङ्कल्पै धर्म्मसाकथ्यगलदमृतधाराप्रवाहपरितर्पितानेकजनमानसैः प्राज्ञभिक्षुमहास्थविरश्रीवनरत्नैरिति । लिखितेयं मञ्जुश्रीघरव्यारविन्दरजोरञ्जितोत्तमाङ्गैः करणिककायस्थश्रीनिधानरैरिति ।

Printed in the Bibl. Ind. Series. Not in Nanjio

## 52.

9990.

Substance seasoned palm leaf Folia 3 20 × 2" Lines 5 on a page Character, Newari of 14th century Complete

*Post Colophon* —काष्ठमण्डपीयेन भिक्षुश्रीकोर्त्तिपण्डितेन लिखितमिद पुस्तकम् ।

Except the 3rd leaf the other leaves have been retouched. It gives a life of Śāntideva. It begins

+ + + + + + नगरे श्रीमञ्जुवर्म्मनाम्नो राज्ञः पुत्र पूर्व्वजिनकृता-
धिकारः प्राप्तमोत्तमभागीयकुशलमूल सम्यक् महायानगोत्र सर्व्वकलाकुशलो
यौवराज्याभिषेकसमये कुलिशयोषिन्निर्म्माणरूपया जनन्या राजमहिष्या अभि
तप्तोदकैस्तप्यमानस्तापमसहमान उक्तः । पुत्र अथ स्वर्गं न गच्छन्ति, राजा
चित्रकर कविरिति । नरेश्वरीभूय पाप कृत्वा मृतस्य निरयगतस्य अतोऽपि
तीव्रतरं दुःख ते भविष्यत्यनमनेन राज्येन । गच्छ वत्स बुद्धबोधिसत्त्वदेश
श्रीमञ्जुवज्राधिष्ठानं, तव भद्र भविष्यतीत्यत स मातुवादेश शिरसि निधाया-
कुटिलहृदयो हरिदश्वतरमभिरुह्य चलित । स चानेकदिनान्यतिक्रम्य गच्छन्
भोजनपानादिकं मनस्यकुर्व्वन् तदादेशैकतानमानस क्वचिदरण्ये कन्यारत्नमपश्यत
तया वाजिन विलय्यासौ भुवमवतारित । स तृष्णार्त्तो जल दृष्ट्वा पातुमुद्यतः ।
तया विषोदकमेतदित्युक्त्वा निवार्य्यान्यदमृतोदक पायितो मांसखादिना दग्ध्वा
भोजितः । तस्य स तामाह । कुतस्त्वमागतासीति । सा प्राह । इहावत्ते स
महाकरुणाकरुणाविषया सद्गुणगणाभरणा सिद्धश्रीमञ्जुवज्रसमाधिरत्नाद्गुरुः,
तत्सकाशादहमागतास्मीत्युक्तो बभ्ररत्नइव दुःखितो जनः परमप्रमोदप्राप्त, तमेव
दर्शयेत्युक्त्वा तयादृतो घोटकमादाय गतो गुरुगुणगणाधारधीरगम्भीर शमदमध
प्राप्त गुरुमालोक्य तुरङ्गममात्मानञ्च नमस्कृत्य गुरवे निर्या[नि]त्य दुरन्तभवदुःखाब्धे-
रुपदेशदानेन मा व्यधीष्टवान् तेन च परिपाटीक्रमादुपदिष्टो द्वादशवर्षास्तत्रैव
समाधार्य्य मञ्जुवज्रमध्यत्नीकृत्य मञ्जुश्रीज्ञान लब्ध्वा गच्छ मध्यदेशमिति गुरुणा
समादिष्टो गत्वा मगधराजान सेवते स्म ।

राउतुत्वेन अचलसेननामा देवदारुखड्गेन कोषगतेन राउतुधर्म्मेण धर्म्मारामो
विहरति स्म । कालान्तरेण तत्सम्पत्तिमसहमानैरन्यैराउतैः राजान विज्ञप्य देव
देवदारुखड्गेन अचलस्य सेवेति युद्धकाले कथमसौ यध्येत । तदेव निरूपयाम्य
त्वद्गमिति अद्यप्यसौ न शक्यते नियोक्तु इतीर्ष्याशल्यचित्त[पी]डितमानमर्म्मभि-
स्तैर्मिलित्वा सर्व्वेषां खड्गो द्रष्टव्य इति राजाज्ञया व्याजेन सर्व्वेषां करवालमालोक्या
चलसेनस्य निस्त्रिंशदर्शनमुपगात । अचलसेन आह न मे खड्गो द्रष्ट, युज्यते

त्रिधा मिवारयोऽपि निश्चलात् स्वयमेव चक्षुरेक पिधाय तमेव पश्येति शिष्ये दर्शिते तत्खड्गस्याभया राजश्चक्षुरेक भूमौ पतित। प्रभावदर्शनादावर्जित स्वप विधिमस्य . प्रशान्तश्रिमके निक्षिप्य (?) निर्व्यक्षीकृत्य श्रीनालन्दामहा विहार गत्वा वेशान्तरेण प्रव्रजित। शान्तिदेवनामा प्रशान्तत्वात् पिटकत्रय श्रुत्वा ध्यायति स्म। सुप्तोऽपि प्रभास्वर सुपतोऽपि कुटिं गतोऽपि तदेवेति भुसु- कुसमाधिसमापन्नत्वात् भुसुकुनामाख्यात सर्वेऽपि कालान्तरेण कैश्चिदाले कुतूहलिभिरालोचित। किमयं किञ्चिज्जानाति नवेति निरूप्यता तावत्। तत्र च प्रत्यब्द ज्येष्ठमासि शुक्लपक्षे ऋद्धिप्रातिहार्यैः पुरश्चप्रभृतय शास्त्रा पूर्व निराकृता इति तदनुकाराय पाठ क्रियते तत्रैवाय निरूप्यता इत्ययमादिष्ट नाह किञ्चिज्जानामीति तेन पुन पुनपरिहारे ध्यधीष्ट (?) तैर्विहारादहि पूर्वोत्तरस्या विस्तीर्णाया धर्मशालाया महापण्डितमण्डलमध्ये स च स्वय चिन्तयति स्म पूर्वकृत सूत्रसमुच्चय शिक्षासमुच्चय बोधिचर्यावतारारत्य ग्रन्थत्रयमस्तीति चेतसि कृत्वा सिंहासनगत प्राह किमार्ष पठामि चार्थार्ष वा। तत्र ऋषि परमार्थज्ञानवान् ऋषयतावित्यत्र श्रोत्रादिक कि ऋषिणा जिनेन प्रोक्तमार्ष ननु प्रज्ञापारमितादौ सभूत्यादिदेशित कथमार्ष इत्यत्रोच्यते युवराजार्यमैत्रेयेण॥

यदर्थवद्धर्मपदोपसंहित
त्रिधातुसक्लेशनिवर्हण वच।
भवेद् भवच्छान्त्यनुशसदर्शक
तदत् क्रमार्ष विपरीतमन्यथा॥

तदाकृष्टमार्ष्याद्यैरर्थार्ष सुभूत्यादिदेशना तु भगवदधिष्ठानादित्यदोष। कुतूहलात्तैरुक्त चार्थार्षमेव तावत् पठ्यतामिति चर्यावतार पठति स्म। तत्र च पाठे।

यदा न भावो नाभावो मते सन्तिष्ठते पुर
तदान्यगत्यभावेन निरालम्ब[ ] प्रशाम्यति।

इत्यत्र श्लोके भगवान् मञ्जुश्री पुर आविर्भूतः, स च तेनैव सार्द्ध मन्त- रीक्षगत क्रमादन्तर्हित॥

तत भद्रदर्शनसविमैत्त्सयनविचारे पीठकुम्मा ततदुक्तकाय सूत्रसमुच्चयादि लक्ष्मा पण्डितैर्लोके प्रचारितम्। तत्र सुगतेत्यादिदृत्ते।

## 53.

9998 **आदिवाग्वज्रचिरत्नविम्ब** । *Adivagvajra Piratna Vimba*

Substance, unseasoned palm leaf 11×1½ inches Folia 2—7 Lines 4 on a page Extent in slokas 0 Character Modern Newari written in a scribbling hand Appearance oldish Incomplete in the beginning

*Fol 2 begins* —

+ + भूमिश्वरोनाथो दशभूमि [?] प्रतिष्ठिता ।
सर्व्वलो[का]स्तथा भक्त्या चिरत्नशरणं गता ॥
सत्कारैः श्रद्धयाभ्यर्च्य प्राभाजन् सर्व्वदा मुदा ।
तदा तत्र सदा भद्र महोत्साह समन्ततः ॥
प्रावर्त्तत निरुत्पातमेतद्धर्मानुभावत
इति मे गुरुणा ख्यात श्रुत मया तथोच्यते ॥

...

2A इति तेन समाख्यात जयश्रिया सुधीमता ।
श्रुत्वा ते श्रावका सर्व्वे प्राभ्यनदन् प्रबोधिता[ ] ॥
तदा रत्ना प्रसन्नात्मा जिनश्रीराज उन्मना ।
चिरत्न शरण गत्वा यथार्हेतद्भत सदा ॥
ततसथा पतयश्चापि चतुर्म्मद्धविहारिण ।
चिरत्नभजनं कृत्वा व्रतमेतत् सदा चरन् ॥
ततस्ते प्रतिन[?] सर्व्वे परिशुद्धत्रिमण्डला[?] ।
यार्हतो निर्म्मलात्मानो बभूवु र्भोगिभागिन ॥
ये वापीद चिरत्नं ग्रथितगुणमयं श्रावयन्ते हि लोकान् ।
श्रद्धाभक्तिप्रसन्ना[?] 8 प्रमुदितमनसा ये च शृण्वन्ति सर्व्वे ॥
ते सर्व्वे बोधिसत्त्वा सकलगुणभृत श्रीसमृद्धा सुधीरा ।
भुक्ता सौख्यं सदा ते दशबलभुवने सम्प्रजाता रमेयु ॥

तद्यथासौ महाबुध शाक्यमुनिर्जगद्गुरो ।
धर्म्मराजा महाभिज्ञः सर्व्वज्ञोऽर्हन् मुनीश्वर ॥
भगवान् श्रीघनः शास्ता तथागतो विनायक ।
मारजित् सुगतो नाथस्त्रैधातुकाधिपो जिनः ॥
श्रीमन्तो नाथनाथस्य गृहस्थस्य महामते [।]।
विहारे जेतकोद्याने विजहार ससाङ्घिकः ॥
तदा तत्र महासत्त्वा बोधिसत्त्वा जिना . ।

3A ++++++ सर्व्वे सद्धर्म्मं श्रोतुमागता ।
तत्र त श्रीघन दृष्ट्वा सुप्रसन्नाश्रया मुदा ॥
तत्पादाब्ज प्रणत्वा सु सभायां समुपाश्रयेत् ।
सर्व्वे प्रत्येकबुद्धाश्च अर्हन्त[ ] समुपागता ॥
भगवन्त समानम्य तत्रैकान्ते समाश्रयन्
श्रावका भिक्षवश्चापि यतयो ब्रह्मचारिण ॥
शास्तार त प्रणत्वा तत्सभायां समुपाश्रयन्

•

ब्रह्मादयो महाभिज्ञा भासयन्तः समन्तत ।
दूरात्त सुगत दृष्ट्वा प्रणमन्त[ ] समागता ॥

•

4 तत्र स भगवाञ्छास्ता दृष्ट्वा सर्व्वान् सभास्थितान्
सर्व्वसंशोधन नाम समाधि विदधे तदा ॥
तस्मिन्नवसरे तत्र रश्मयन्ते प्रभास्वराः
भुवनस्य दिश सर्व्वाः भासयन्त 4A समागता ॥
तदा तत्रास्ति सस्पृष्ट विहारे तत्र सर्व्वतः ।
हेमरत्नमया आसन् स्तम्भा सर्व्वे प्रशोभिता ॥
कूटागाराश्च सर्व्वेऽपि सुवर्णरत्नशोभिता ।
द्वाराणि तत्र सर्व्वाणि हेमरूप्यमयानि च ॥

5 एतन्महाद्भुतं दृष्ट्वा सर्व्वलोकाः सुरादय ।
विस्मयाक्रान्तचित्तास्ते पश्यन्त समवस्थिता[ः] ॥

. ... .

तदालोक्य सुधीमान् स बोधिसत्त्वो जिनात्मजः ।
हसी सर्व्वस्य वरदो विघ्नम्मौ 5A सविलोकयन् ॥
य श्रीमान् महाभिज्ञ आर्य्यावलोकितेश्वर ।
बोधिसत्त्वो महासत्त्व सर्व्वलोकाधिपेश्वरः ॥
आजितस्यामिताभस्य सुताज्ञा करुणामय ।
लोकधातो सुखावत्या सत्त्वानुद्धर्त्तुमागतः ॥

एवमसौ महासत्त्वो महापुण्य समृद्धिमान् ।
6 इहापि पापिन सत्त्वान् समुद्धर्त्तुं समागतः ॥
इत्यादिष्ट मुनीन्द्रेण श्रुत्वा स सुगतात्मज ।
धीमान् सर्व्वनीवरण[ ] विष्कम्भी विस्मयान्वितः ॥
भगवन्त मुनीन्द्र त समालोक्य सकौतुक ।
लोकेशपुण्यमाहात्म्य दृष्ट्वैवमभाषत ॥
भगवन् नरकेऽवीचौ महानग्निस्तदोत्थल
वीचीर्न जायते तस्य ज्वालया महतोऽर्चिष ॥
तत् कथ स महासत्त्वो लोकेश्वर दयान्वित ।
तत्र सत्त्वान् समुद्धर्त्तुं प्रविशति जगद्गुरु ॥
वप्रप्राकारपर्य्यन्तमयोमय महीतलम् ।
6A समन्ततमिखरा तत्र प्रोज्ज्वलाग्निशिखाकुला ॥
तस्या सम्पोषिता कुम्भी महती तैलपूरिता ।
तस्या गता दुरात्मान पापिष्ठा दुरितारता ॥
एव ते प्राणिनो दृष्ट्वा असह्यवेदनातुरा ।
स्वदुष्कृताभिभुञ्जन्ते तिष्ठन्ति परितापिता ॥
तत्राप्यसौ महासत्त्वो लोकनाथो जिनात्मज
प्रविष्ट कथमुद्धृत्य सम्प्रेषय शुभे वते ॥
बोधिमार्गे प्रतिष्ठाप्य प्रेषयीया सुखावती ।
ये चापि पापिनो दुष्टास्तानपीत्थं प्रयत्नत ॥

7A पत्रोधय समालोक्य चारयस्व शुभे सदा ।
इत्येव वचनं श्रुत्वा सबोधिं यदि वाञ्छसि ॥
बोधिचर्य्याव्रतं धृत्वा सञ्चरस्व जगद्धिते ।
यद्येवं कुरुषे लोके दयाधर्म्मरतो भवान् ।
तत सद्धर्म्मराजस्य लोकेश्वर जिनात्मज
समीक्ष्य माञ्जलिनंत्वा सम्प्रयाति स्वमालयं ॥
इत्यादिवात्रकाभिरत्नविम्ब समाप्तम् । शुभम् ।

There is also a leaf marked 1, containing the following —

श्रीभगवत्यै वस्त्रवैरोचनीदेव्यै नमः
देवीं त्वमेव गिरिजा कमला त्वमेव ।
पद्मावती त्वमसिता विश्व + + माता
ख्याता त्वमेव भुवने जगदेकरूपा ।
तुभ्यं नमोऽस्तु म[न]सा वपुषा गिरा च ॥
यानत्रयेषु दश पारमितेति गीता
विस्तीर्णयानगमनाकुलशून्यतेति ।
प्रज्ञाप्रमङ्गमतुलामतपूर्णदात्रा

## 64

9988

The first leaf of a MS. of seasoned palm leaf. Written in the Newar character of the [illegible]teenth century. It contains the following —

मत्वार्थएव मम भक्तिरभक्तिरन्या
भक्तिस्तु तस्य मयि यो न कृपां जहाति ।
व्यक्ता कृपां विचरत स्खलितानि यानि
प्रोद्धर्तुमर्हति कृपेव तु तानि नान्या ॥
नैवार्चितोऽस्मि स च शासनधुर्द्धरो मे
सत्वेषु यस्य करुणानुगता प्रवृत्तिम् ।
प्रीणं श्रुतस्य करुणा च मतिश्च पद्मौ
यस्यास्ति तेन सुमतोऽर्चित एव नित्यम् ॥

सत्त्वोपकारमधिकृत्य मतोऽस्मि सिद्धि
सत्त्वार्थमेव तनुमेष समुद्वहामि ।
सत्त्वान् छिनत्ति मनसापि हि यश्च कस्मात्
मामेव संश्रयति+मयि निर्व्यपेक्ष ॥
पूजा तु सा भवति सत्त्वहिता कृथापि
पूज्यकान् विहेठयति तेन विहेठितोऽहं ।
सत्त्वोपकारपरमः हि ममाग्रपूजा
सत्त्वापकोरपरमश्च पराभव स्यात् ॥

## 55

### 10782 लोकेश्वरशतकटीका *Lokeśvara śataka ṭīkā*

*By* DHARMARĀJA

Substance Nepalese paper 8×6 inches Folia 61 Lines 10 on a page Character Newari Date ? Appearance discoloured

Lokeśvaraśataka is a century of verses in praise of Lokeśvara by Vajradattācārya The present MS contains a commentary on the first 81 verses of Lokeśvaraśataka, by Dharmarāja

It begins —

ॐ नमः श्रीलोकनाथाय ।
नमो गुरवे ।
प्रणम्य धर्म्मराजेन पश्चादेवौ जिनप्रभू ।
क्रियते शतकस्येय टीका लोकेश्वरी मया ।
.. .. .
श्रीवज्रदत्तकविराजोर्थ्यविपूर्व्वक श्रीमल्लोकेश्वरावयवमाहात्म्य
वर्णयति स्म । भास्वदित्यादि ।

The 60th leaf contains 3 lines and a half only. Then there is a leaf written on one side only

For Tibetan translations see Beckh, p 110A, para 11, p 125A, para 12, and p 131A, para 55

## 56

**10741C परमार्थनामसंगीति ।** *Paramartha nāma Sangiti*

Fola 21 Substance Nepalese paper Character modern Newari See the text number

*Colophon* —

इति आर्य्यमायाजालात् षोडशसाहस्रिकात् महायोगतन्त्रात् पातिममाधिजालाधिपटलाद्भगवन्तनथागतश्रीसाक्यमुनिभाषिता भगवतो मञ्जुश्रीज्ञानसत्त्वस्य इयमरमार्थनामसंगीति परिसमाप्त ।

*Post Colophon* —ये धर्म्मायादि etc

लिखित वज्राचार्य्य चिरत्नभद्रेनेति ।

दानपति ते भूसाकोया साक्यभिक्षुभाजरदयात घोमाविया जुलो ।

यादृश पुस्तक etc

शुभम् ।

*Other Colophons* —

8B आध्येषणाज्ञानगाथा षोडश ।

1A प्रतिवचनगाथा षट ।

4B षट्कुलावलोकनगाथा द्वे ।

6B वज्रधातुमहामण्डलगाथाश्चतुर्द्दश ।

9B सुविशुद्धधर्म्मधातुज्ञानगाथा पञ्चविंशति ।

10B आदर्शज्ञानगाथा पादोन सार्द्धोदश ।

15B प्रत्यवेक्षणाज्ञानगाथा द्वाचत्वारिंशत् ।

18B समताज्ञानगाथाश्चतुर्विंशति ।

20A कृत्यानुष्ठानगाथा पञ्चदश ।

21A पञ्चतथागतज्ञानगाथाश्चतिपञ्च मन्त्रविन्यास ।

Printed in Russia along with Mahāvyutpatti in 1887 Described by Raja Rajendralal Mitra in Nep Bud Lit, p 175

There is an illustration of Manjusri with 8 hands

*Beginning* —ॐ नमो मञ्जुनाथाय ।

अथ वज्रधर[ ] श्रीमान् दुर्दान्तदमक[ ] परः ।
त्रैलोक्यविजयी वीरो गुह्यराट्कुलिशेश्वरः ॥
विबुद्धपुण्डरीकाक्षः प्रोत्फुल्लकमलानन[ ] ।
प्रोल्लालय वज्रवरो स्वकरेण मुहुर्मुहुः ॥
भ्रकुटितरङ्गप्रमुखै रत्नैः वज्रपाणिभिः ।
दुर्दान्तदमको वीरो वीरवीभत्सरूपिभिः ॥

For a Tibetan translation see Beckh, p 72, and for the Tibetan translations of its various commentaries see Cord, pp 265—267

## 57.

10760 **परमार्थनामसंगीति ।** *Paramārtha nāma Saṅgīti*

Substance Nepalese paper with black ground 9 × 3½ inches Folia 13—23 and 28—31 (14 by counting) Lines 5 on a page of which the first third and the fifth are in gold and the second and the fourth are in silver The silver lines are mostly faded *Written in the Newari character of the 15th century*

Fol 16B प्रत्यवेक्षणाज्ञानगाथा द्वाचत्वारिंशत् ४२ ।

Fol 19B, समताज्ञानगाथा चतुर्विंशति २४ ।

The 24th verse runs —

अनङ्गकायाग्र कायाग्र कायकोटिविभावकः ।
अशेषरूपसन्दर्शी रत्नकेतु र्महामणिः ॥

22A पञ्चतथागतज्ञानस्तुतिगाथा ।

28A दतोयचक्रस्येयमनुशंसापदानि दामद्वाग्रत् ५२ ॥

## 58.

10759 **अभिधानोत्तर ।** *Abhidhānottara*

Substance Nepalese paper yellow on one side and white on the other 11½ × 2½ inches Folia 116 Lines 9 on a page Character Modern Newari Copied from an original dated N S 418 = A D 1298 Appearance fresh

विष्ट (विन्द) वन उद्दपार्श्वे तञ्जाग पुष्करणी च तु ।
एषु स्थानेषु या कन्या सहजाश्च स्वयोनिजाः ॥
देशे देशे विज्ञानीयात् ज्ञानयुक्ताश्चसंस्थिताः ।
द्वादशानां तु चक्राणां सम्भेदेन तु पीठजाः ॥
द्वादशपीठादयः प्रोक्ता षट्त्रिंशधातुकारणात ।
एकैकस्य तु धातूनां चतुरायतनानि च ॥
द्वादशाकारसञ्चार्य विज्ञेया सह योगिभि ॥

The favourite places of Kankālinis or skeleton deities are enumerated here —

15 B अथ कङ्कालयोगेन देशे देशे स्वयोनिजम् ।
ज्ञानयुक्ता विज्ञानीयाद्योगिनी वीरनायिका ॥

१
अट्टहासे उमादेवी नायकी सर्व्वयोगिनी ।
तस्मिन् स्थाने स्थिता देवी महाघण्टा कदम्बके ॥
तस्य देवी सदावीर क्षेत्रपालो महाबल ।
कङ्कालप्रमुखाद्या सा सम्भवन्ति महात्मनां ॥
मुख्यं तेषु कङ्कालमोद्भावरूपतोद्गत ।
स्वधातुस्थितविज्ञान सर्व्वदेशगत क्रमात ॥

२ ३ ४ ५
कोल्लागिरि वरुण्यां च देवीकोट विरजक ।

६ ७ ८ ९
एकाम्रां ततपुरे तु एलापूरे काश्मीरके ॥

१० ११
महानगरे तथा च पुण्ड्रवर्द्धनक्षेत्रके ।

१२ १३ १४ १५
जयन्त्यां एकापुरे तु सोपारे चरित्रे तथा ।

१६ १७ १८ १९
ओड्डायणे आम्रातके क्षीरिक तु मायापुरे ।

२० २१ २२
चम्पुके राजगृहे च ओड्रे विषयेभिस्तथा ।

२१ २४
मालवे पुष्पीराद्ये तु चतुर्विंशतिपीठके ।
पर्व्वताग्र तालवृत्तं वटान्तु काश्मनस्तथा ॥
जटिवृत्तं पराकमा पर्व्वताग्रसमाश्रिता ।
महास्थली पेड़गर्भे अश्वत्थकूटागारकम् ॥
व्योदुम्बर ग्रामस्थली तु करञ्जाशोकमाश्रिता ।
कनकवल्चप्रागन्तु चूडधाक्ष च दिक्षकौ ॥
सेलकूटमधुवृक्षेषु च समाश्रिता पुरात् ।
रत्नयोनि उच्छुष्माङ्गं महाबलयोगालयम् ॥
कपालं रजप्रचण्डा योनिवीर उच्छुष्माङ्गं ।
महाबलरक्ता तथा योनिवीरश्मशानभवा ॥
योनिसोमसम्भवा तु महाबला कुलोद्भवा ।
भीमवक्त्रोद्भवा चैव मेदमहाद्यान्तकं ।
कुसुमयोनिभ्यां तथा पुनरेव मदं स्मृतम् ।
एषु कुलोद्भवा देवी महाकल्पी कन्यकाम् ॥
महालक्ष्मी अग्निमुखी च क्षेत्रपालो वरानन ।
अग्निमुखमिति ख्यातो कङ्कालसुखवेदकः ॥
तस्य चवनग्रहणी योगिनी हृदयसंस्फुरेत् ।
तेन सम्पुटयोगेषु वीराद्वयसमाश्रिता ॥
सर्व्वेषु चितहेतवर्थो स्थिता च वर्णमण्डले ।
सञ्चारगतिरूपेषु जायते सर्व्वदेशका ॥
लंकेश्वरी घोर्द्धकेशी क्षेत्रपालो महोत्कटः ।
ऊर्द्ध्वकेशो इति ख्यातो कङ्कालसुखहेतुकम् ॥
शेषपूर्व्वोक्तविज्ञेयं विशेषं वरयोगिनी ।
कर्णमोटी च रौद्रा तु क्षेत्रपालो महारवः ॥
हेतुकः परमेश्वर महारौद्र अथापि वा ।
कङ्कालसुखमूर्त्तेषु विज्ञेया परमं पदम् ॥
सौम्यरूपा चागला च क्षेत्रपालाट्टहासकम् ।
महानादोऽपि विज्ञेया चपला च महद्धिंको ॥

कङ्कालचण्डालिनी तु ज्वालामध्ये महासुखम् ।
अग्निमुखी महावीर्य्या क्षेत्रपालो घण्टारवः ॥
महावीर्य्या इति ख्यातो कङ्कालसुखसम्भवः ।
पिङ्गलाख्या भीषणाक्षी क्षेत्रपालो महाजङ्घक ॥
महाभयङ्करो वा कङ्कालसुखपूरक ।
महाभीमा महाबला क्षेत्रपाला महागज ॥
अथवा गजकर्णा तु क्षेत्रपालो गजकर्णक ।
कङ्कालसुखमारूढ़ सर्व्वनाडीषु तन्मयम् ॥
गोकर्णा च पर्व्वताग्नी क्षेत्रपालो महाभीमक ।
नाडीगङ्गामथापि वा कङ्कालसुखलीनकम् ॥
कमणी भीमवक्त्रा च क्षेत्रपालो करालक ।
मोहकरो बृहत्सुख कङ्कालसुखमानक ॥

157B. सर्व्वचक्रजयाश्चैव भयानकस्तथापरा ।
सौम्यास्या दिव्यरूपी च साधकानां प्रियङ्गमा ॥
चलम्बिनी प्रलम्बिनी एवं सर्व्व यथाक्रमम् ।
अट्टहासे तु चक्रस्था कोलगिर्य्यामङ्गस्थिता ॥
वरस्था सिद्धि[भि]लस्था देवीकोटेषु प्रेतस्थाम् ।
विरजायां पट्टस्था तु अरण्ये शूकरस्थिता ॥
सत पुरे प्रेतस्था तु खरस्था च एकापुरे ।
काश्मीरे धातवस्था तु मधदेश महिस स्थिता ॥
नगरे मुखपृष्ठे तु मडस्था पुण्ड्रवर्द्धने ।
कयन्यां वारुस्था तु एकापूरे कूटस्थिता ॥
सोपारे घरेतस्था तु करञ्जस्था चरित्रके ।
ओड्डायने मारस्थातु मडस्था तु जालन्धरे ॥
सौरिका अग्निस्थिता च मायापूरे मड़ोपरि ।
अर्बुदो सिंहस्थिता च चक्रस्थिता राजगृहे ॥
भोटविषये प्रेतस्था मडस्थो मालवे तथा ।
एव क्षेत्रेषु सिद्धि स्यात् कङ्कालेषु प्रयोगत ॥

करपद्मामुरूपरौप्य कन्दुनालसमुत्थितम् ।
व्याप्त सर्व्वेषु सन्धीना ज्ञानमेतत् स पश्यति ॥

## 72.

### 3825 वज्रडाकतन्त्र । *Vajradāka-Tantra.*

Substance palm leaf 12 × 2 inches Folia 126 Lines 7 on a page Extent in slokas 3600 Character Newari of the 14th century A D Appearance, old and worm eaten *Incomplete*

For a Tibetan translation see Beckh 75, para 6
It begins —

रहस्ये परमे रम्ये सर्व्वात्मनि सदा स्थित ।
सर्व्वडाकिनीमय सत्त्वो वज्रडाक सुखं परम् ॥
श्रसौ स्वयम्भू भगवानेक एवाधि दैवत ।
सम्भवाभावदग्धादिनिष्क्रान्ताक्षमयावाग्गोचरः ॥
दुर्लभ त्रिषु लोकेषु आदिमध्यान्तसंस्थितम् ।
न रागो न विरागश्च मध्यमो नोपलभ्यते ॥
सर्व्वासनामयुक्तेय श्रदयज्ञानमुत्तमम् ।
दुश्चारिण्योऽपि सिध्यते सर्व्वलाभसुखोत्सवै ॥
सर्व्वाकारधरा सिद्धिर्डाकिनीति प्रसिध्यति ।
सर्व्वतो विश्वमूर्दा तु सर्व्वतो विश्वसम्बरै ॥
सर्व्वडाकिनीसमायोग वज्रडाक प्रसिध्यति ।
स्वतत्त्वाश्रययोगात्तु देवताश्चम्बन प्रति ॥
प्रतिबिम्बसमायोगो निर्मिताादिषु जायते ।
श्रात्मयोग स्वसमय सिध्यते परमाक्षरः ॥
बोधिचित्तसमायोगश्चर्याधिपप्रमुश्च यम् ।
बोधिचित्तमिद वज्रं सर्व्वबुद्धस्वभावत ॥
तस्मात् सर्व्वप्रयत्नेन पूजयेद्विश्वरूपिणम् ।
अनाहतस्वभावेन व्याप्य विश्व व्यवस्थितम् ॥

आत्मा वै सर्व्वबुद्धत्वं सर्व्वसौरित्वमेव च ।
आधिदैवतयोगेन तस्मादात्मैव साधयेत् ॥
अनेन सर्व्वबुद्धत्वं सर्व्वसौरित्वमेव च ।
सर्व्ववज्रधरत्वञ्च सिध्यन्तीहैव जन्मनि ॥
इत्याह भगवान् श्रीवज्रधरस्तथागत ।
सर्व्वडाकिनीसमायोग वज्रडाक परं सुखम् ॥
आकाशलक्षणं सर्व्वमाकाशञ्चाप्यलक्षणम् ।
2 आकाशमन्त्रसर्व्वञ्च धातुकमर्थोषत ॥
दृश्यते स्पृश्यते चैव यथा माया हि सर्व्वत ।
न चोपलभ्यते चैव सर्व्वस्य जगतः स्थिते ॥
अनया सुद[प]ा योगी भावयेद्भुवनत्रयम् ।
येनैव मूढा बध्यन्ते बुद्धाः क्रीडन्ति तैरिह ॥
सत्त्वसम्पूर्णयोगेन नान्यथा याति दीपवत् ।
रूप वैरोचनो बुद्धो वज्रसूर्य्यस्तु वेदना ॥
पद्मनर्त्तेश्वर सञ्ज्ञा संस्कारो वज्रराट् तथा ।
विज्ञान वज्रसत्त्वस्तु + + + + ।
सर्व्वरूपस्वरूपोसौ वज्रडाक प्रसिध्यति ॥
एक एव महाभूत सर्व्वानन्दप्रदायक ।
विरज रजमिलुप्त महामायास्वभावत ॥
पृथिवी पातनी चैव अप्धातु मारणी तथा ।
आकर्षण्यग्निधातुश्च वायुनर्त्तेश्वरी तथा ॥
आकाशधातुरूपस्तु महामायाश्वगामिनी ।
पञ्चभूतस्वभावेन स्थिता सा वज्रनायिका ॥
सर्व्वभूतसमायोगडाकिनी परमोज्ज्वला ।
मद्गुमी मोहवज्राख्य देशवज्रा द्विधा स्मृति ॥
ईर्ष्यावज्रस्तथाप्राप्य रागवज्रमुख स्मृतम् ।
स्पर्शमात्सर्य्यवज्रस्तु + + + + ॥

सर्व्वायतनसमायोग वज्रडाक परं सुखम् ।
शून्यरूपमिदं सर्व्वं शून्याकारेण चक्षुषा ॥
पश्यता निर्व्विकल्पेन सता नि प्रभुता भवेत् ।
व्योमरूपाणि सर्व्वाणि व्योमरूपेण चेतसा ॥
नि स्वभावनयुक्तो निर्व्विकल्प प्रजायते ।
इत्याह भगवान् वज्री वज्रसत्त्वस्तथागत ॥

21 सर्व्वतथागतसमेघप्रतिहतसमयमहासुख नाम समाधि नाम ध्यानेदमुवाच ।

यावत संसारवासस्था भवन्ति वरसूरय ।
तावत सत्त्वार्थमतुल प्रज्ञा कर्त्तुमनिर्हंस ॥
एत एव हि सत्सत्वा सर्व्वार्थे सदाभया ।
अविषण्णाः सुसत्त्वार्थं महावीर्य्येण कुर्व्वते ॥
आकाशनिरवासन्तु भवप्राणिधिशुद्धये ।
सत्त्वार्थोद्यतचित्तानां सौरिणां भवशुद्धये ॥
एषाञ्च देवपुत्राणां नित्य राग प्रमादिनाम् ।
अन्येषां रागिणामर्थे सर्व्वरागविशुद्धये ॥
दास्यामि कल्पविसर महासुखप्रसिद्धये ।
अनादिनिधन चाद्य सर्व्वकल्पादिभावितम् ॥
भूतपूर्व्वमतीते पि कल्पादौ हि महासुख ।
वज्रसत्त्वमहाराज आसीदेकोऽधिदैवतः ॥
सर्व्वसत्त्वोद्भवाधाय सर्व्वलोकाद्यधातुषु
गीतवाद्यादिनन्यर्त्तं सतत्त्वं[स्व] भवाधिपः ॥
सुरलोके हि सम्भूत सर्व्वसत्त्वसमुद्भव ।
तत प्रसूता सत्त्वास्तु कामरागविवर्ज्जिता ॥
तथास्तु विनय शाला चाद्यरोद्भववर्ज्जित ।
जगाम भगवतां भगवन् निराकां गगनोपमाम् ॥
भूय कश्चिन सत्त्वार्थं न बुद्धार्थमनुत्तरम् ।
प्रचाद्र कर्म्माकार्षे परार्थं हि तमः परम् ॥

ततः सर्व्वं जगदर्थं मायया शून्यता सदा ।
असत्स्वार्थतया सर्व्वं प्रयात नरकात् पुनः ॥
ततः शून्येषु सर्व्वेषु लोकधातुषु संस्थिताः ।
सर्व्वबुद्धसमानेन चोदयामास मां लघु ॥

ॐ महासुखवज्रसत्त्व ॐ अहो सुरतस्त्वम् ।

8 सर्वोदितमात्रे तु मयि सर्व्वसुखप्रद ।
शुद्धकामार्थसिद्ध हि जातं सर्व्वसुखी जगत् ॥
यच्च कामरूपाय सर्व्वबुद्धैरधिष्ठित ।
ममापि धर्म्मकायाय सर्व्वबुद्धाधिप[ः] पतिः ॥
सर्व्वबुद्धमहाराजः सर्व्वबुद्धमहासुख ।
सर्व्वबुद्धमहाकाय सर्व्वबुद्धसरस्वति ॥
सर्व्वबुद्धमहाचित्त सर्व्वबुद्धमहामह ।
सर्व्वबुद्धमहाराग सर्व्ववज्रधराधिप ॥
सर्व्वलोकेश्वरपतिः सर्व्वरत्नाधिपेश्वर ।
सर्व्वडाकिनीसमायोगात् सर्व्वबुद्धसमो भवेत् ॥
सर्व्वबुद्धमयत्वाच्च वज्रडाक प्रसिध्यति ।
अथ महामण्डलयोगेन सर्व्वमण्डलमालिखेत् ॥
तस्य मध्ये यथान्याय वज्रसत्त्व निवेशयेत् ।
सस्मितं चन्द्रवर्णन्तु रक्ताज्वालाकुलन्तथा ॥
बुद्धमालाविरचित सर्व्वाभरणभूषितम् ।
चतुर्व्वक्त्र चतुर्भुजं (त्रिनेत्र) जटामुकुटमण्डितम् ॥
चतुर्विंशासमायुक्त बुद्धबिम्बोपशोभितम् ।
दक्षिणमसितभीम्य वामे रक्तन्तथापरम् ॥
पश्चिम पीतसन्निभ कपालकर्त्रं ताण्डवान्वितम् ।
(त्रिदशभयकर) वज्र खड्गधरश्चैव घण्टाकपालमेव च ॥
[illegible] ।
सर्व्वडाकिनीसमायोग वज्रडाकः पर सुखम् ॥

इत्याह भगवान् वज्री वज्रसत्त्वस्तथागत ।
माता [च] भगिनी चैव दुहिता बान्धवी तथा ॥
कामयेद्द्वन्द्वयोगेन सर्व्वसिद्धिप्रसाधकः ।
3A गोमांस हयमांसानि भक्षयेदविशङ्कित ॥
[वा]माचार सदा लोके वामतर्पणभक्षणम् ।
वामोद्भवं जगत्सर्व्वं स्थावराद्या जङ्गमम् ॥
दूती त्यक्ता तु गच्छेत् सर्व्वकामविमोहितः ।
दूती रक्ता महामोक्ष भक्षयेव न संशयः ॥
व्यव[स]ाय वसपूर्णः साधक छ्न्यसत्पर ॥
समयकुलाचारो वै एकत्र चक्रभोजक ॥
पञ्चवर्णसमाचार एकवर्णन्तु भक्षयेत् ।
मधुरक्तं सकर्पूरं रक्तचन्दनयोजितम् ॥
कुलिशाम्बुजसमायुक्तं + + + + ।
पञ्चामृत भवेदेतत् सर्व्वसिद्धिप्रसाधकम् ॥
अनामाङ्गुष्ठचक्राभ्या लेहयेत् योगवित् सदा ।
सोमपान सदाखाद्य सिद्धिमाप्नोति शाश्वतीम् ॥
एतत् परमं समये कथितं तव वरानने ।
सोपायसर्व्वकर्माणि निर्व्विशङ्केन स्थापयेत् सदा ॥
निर्व्विकल्पेन भावेन सर्व्वकर्म्माणि सर्व्वदा ।
आचरेन्निर्व्विशङ्केन तत्तेषामुत्तमोत्तम ॥
विषयान् सेव्यमानस्य निर्व्विशङ्केन चेतसा ।
केसोयःकाशुभावेन तन्नयो दूरतिक्रम ॥
यस्तु सर्व्वाणि कर्म्माणि प्रज्ञया विनियोजयेत् ।
सा च शून्यपदे योज्या तथा ह्येतन्महात्मनाम् ॥
प्रज्ञामङ्गमरूपाणि निर्व्विकल्पेन चेतसा ।
नि प्राप्ताचारसञ्चारस्तपस्तेषा महात्मनाम् ॥
प्रज्ञोपायविनान्यत्र यदि चित्तं न संक्रमेत् ।
नियतं तत् समुद्दिष्ट महाबोधिप्रदायका ॥
योगिना अभियुक्तानां निर्व्विकल्पानुगामिनाम् ।

4 तेषां सर्व्वाणि भूतानि प्रज्ञापारमितानि च ॥
प्रज्ञादर्पणसङ्काशं तदाकारं वासंस्कृतम् ।
प्रज्ञायत्ता स्मृता तेषां निर्व्विकल्पात्मचेतसा ।
दर्पणप्रतिबिम्बश्च स्वप्नमायार्थबुद्बुदोपमम् ।
इन्द्रजालवाद्दृश्यं य पश्येत् स प्रभु स्मृत ॥
तद्विद् गन्धर्व्वनगरं विपाकश्चैव संस्कृतम् ।
यथाकारं प्रपश्येद्य तस्यायत्ता प्रज्ञा स्मृता ॥

तेन न कस्यचित् स्थितिरस्थिर्यन्वाभिनिवेश स्यात । एवञ्चेव वज्रमूर्तेरपि मायोपमैर्भावै विशिष्टो सम्भोगसञ्जातसुखपरिणामनया किञ्चिद्विशिष्टसम्भोग-सञ्जात सुखपरपरिणामनया किञ्चिद्विशिष्टफल प्राप्यते न चैत स्थिरपला भावा। किन्त्वाभासमात्रलक्षणा यद्येते विशिष्टभावनाभ्यासबलात् विशिष्टसुखसम्भोगमनस्या-दिक कार्य्यमुत्पाद्य अनुत्तरफलावाप्तौ हेतुभाव प्रतिपद्यते तदाह्यभवनदेव नाकश्चिद्दोष (?)

तस्मात् सर्व्वप्रयत्नेन पूजयेत् सर्व्वगामिनी ॥
दुष्करैर्निंयमैस्तीव्रैर्मूर्त्ति शुष्यति दुःखिता ।
दुःखात् विक्षिप्यते चित्तम्विक्षेपो सिद्धिरन्यथा ॥
सर्व्वमूर्त्तिदृढत्वाच्च सर्व्वसौख्यैर्दृढीभवेत्
दुःखैश्चलत्वमायाति निरोधञ्चाधिगच्छति ॥
कायवाक्चित्तसौख्य प्राप्तो बोधिमवाप्नुयात् ।
अन्यथाकालमरणं पच्यते नरके ध्रुवम् ॥
इत्याह भगवान् वज्री वज्रसत्त्वयागन ।
वज्रडाकिनीसमायोग वज्रडाक पर सुखम् ॥

4B इति वज्रडाकमहातन्त्रे परतत्त्वावलोकविषयावतार ज्ञानपटल प्रथम ।
अथ भगवन्त पुनरपि पूजा कृत्वा प्रणिपत्यैवमाह ।
भाषस्व भगवन् देव सर्व्वदुःखप्रभञ्जन ।

हृदय येन सर्व्वदुष्टा सर्व्वतथागतप्रज्ञानद्रोहका रुद्रदेवादय सर्व्वसत्त्वा दाम्यन्ते शाम्यन्ते विनेय यास्यन्ति पात्यन्ते । आबोधिमण्ड[ल] मयोद्युक्त कुर्व्वतेति । अथ भगवान् सर्व्वगतकायवाकचित्तवज्राधिपतिरिदमदाह्यहार ।

झाइअइ वैरोयण तसु वणान्तराइ ॥
तह पह धम्मसवरा दिट्ठाभइ ॥
तियसरसिरसि भुयिश्रो ॥
सयारमण्डलय मज्झासनो धेलिवाण परिडसिओ ॥
आयरसरपरिसंट्ठिओ सवरो ।
पुणोवि सवरो पञ्चशाणामनो खण्डेलुविन्दुसोहिओ ॥
ससमज्झट्ठिओ वीओ ।
दह वाम परिभोसिओ सप्त मज्झट्ठिओ
तिश्च वश्राण । पणवि धरङ्ख पड़िहासइ ।
ॐ ॐ फलइ साबसरपरिपूरिअइ
फणश लए विग । सेसहएथ परिपूरिअइ
पश्च मज्झट्ठिओ तत्तो ॥ छायाएइ ॥
सवरो रवसुरुट्टो । इसरसिरसंट्ठिओ पुणोवि पश्चन्तो । णावसर-
परिभोसिओ ॥ सीसवरो रवणो रुद्दो । सूमारकलो मरणो ।
ईसरखण्डेलु भूयिश्रो । सोहइ सवरो । रवणोरुद्दो ॥
पुणोवि मज्झासर जीवइ । सवरो खण्डेलु विमड लमयिइओ ।
पुणोवि सव्वलतस्सवरो थाहो ॥ कयारभ्यणविहसणो सेसो ।
वैरोयण विविह मञ्चवर पूरिओ विहिणा ।
इत्याह भगवान् वज्री वज्रसत्त्वस्तथागत ।
षड्वीरसमायोगडाकिनीजालसम्बरः ।
तस्मिन् ह्रंकारनिर्ज्जातविश्वपद्मार्कमण्डलम् ॥
कर्म्मवज्रमध्यस्थ वै ह्रूं तत्त्वं विभावयेत् ।
स्फारयेत् डाकिनीचक्र रश्मिमालामनेकधा ॥
द्विभुजैकवक्त्रा त्रिनेत्रा रक्तवर्णा महाघोरा ।
शूलाकारं भावयन् का रक्ताच्छा पिङ्गलोर्द्ध्वकेशाम् ॥
नवयौवनसम्पन्ना व्याघ्रचर्म्माम्बरधराम् ।
लम्बिका महाघोरा भयस्यापि भयङ्करीम् ॥
सर्व्वडाकिनीसमायोगवज्रडाक प्रसिध्यति ।
इत्याह भगवान् वज्री वज्रसत्त्वस्तथागत. ॥

पुव्वघुम्मिअ कम्मन्ताओ वक्किसमेन्दे णिभणिअम् ।
कुस कुस सत्त विञोअ ॥ वन्देहिभउ कुडिल उभड एष पुणो विभणिअर्थम् ।
अलिअ तोसिअ सार्थं । रूअ विशए एष सवभाव भणिअम ॥

कण्ठाकवओ आए सरसकुलम ।

भण पासट्ठिअ एस भणिअव्वम् ॥

रविआसण सट्ठिओ सवरो दइवण खण्डेन्दुबिन्दुपरिपूरिअम् ।
एष पुणोवि कहिअ ॥ दिणअर सहाअ परिभोसिओ ।

सवरो विसम सण्ठिओ वेसु गुणिअव्वम् ।
मेकारोऽभ्र बालेन्दुबिन्दु ओइअ पुणो विभणिअम् ॥
फटफटाटोपटकारमोक्खिअम् ॥
सयलविकुप्पत सदद्द हडाइ णिमवद ॥
पञ्चवग्गवेसु सजुत्तो पञ्चवग्गपञ्चाण पुणोइ भणिअम् ।
भखभखण्डि वसखण्डि रूअ लमालाक्कम्बे भमु ।

5A गिरु गिरु सल पाय लायलु बङ्ग सण वोतज्जय विगुणिअम ॥
आम्बाइ कवसु तिअ तिअ पउङ्ग मवणसट्ठिअ ।
एघात्त सजोअ भणिहव्व ॥
सोहइ रवि आसणट्ठिओ । सवरो खउवाण परिपूरिओ ॥
पुणोवि भणिअ तिअ दिवा अग्निमो असणिठअ वीओ ।
वारहे वाण परिट्ठिओ । खण्डमण्डलभूसिअम् पुणो विभणिअम् ।
कसाकव पञ्चवग्गान्त आमणट्ठिओ ।
आअरविन्द सजुतुओ एष वि भणिअव्वम् ॥
मसरो वेसिवाण सङ्गहिओ, पुणोवि तिअवाण परिभोसिओ ॥
सवरो पुणोइ सवरो पञ्चवाणसण किओ ।
एष सवखण्डेन्दुमण्डिभूसिअम् ।
मुखान्ता पुणपुण सुणिअम् ।
कस चधरं सरवरधरो एक्क एक्कलिअत्तम् ।
एषसरूव पुण पुण भणिअम् ।
सवरो उआर सराहदो । खण्डेन्दुबिन्दु पुणोवि परिभोसिओ

फलारथ्यपत्तप सोष्ट्यो बहुविविह फलफुलकुसुम सङ्कुष्यो ॥
यास देवि महामाया सर्व्वसिद्धिप्रदायका ।

इत्येव भाषितमात्रेण सर्व्वलोकधातव कम्पिता सर्व्वतथागता सखस्ता पुनरपि सर्व्वतथागत बोधिमभिसम्बुद्धा सर्व्वपर्व्वता कम्पिता स्फुटिता सर्व्वदुष्ट विनीता दमिता शमिता । व्याकृता मण्डलप्रवेशिता समयैर्बद्धा वशीकृता । सर्व्वमातृगणभूतगणग्रहा ज्वरासर्व्वग्रहरात्तसविनायका पापा नरका स्फाटिताः पातिता विनाशिताः ।

7A इति सर्व्वकर्म्मप्रसवविधिग्रह मायाविकुर्व्वणमन्त्रविधिपटलो द्वितीय ,

11B सर्व्वनागाकर्षणपटलस्तृतीय

15B इति सर्व्वकर्म्मप्रसरोदयो नाम विधिविस्तरपटलश्चतुर्थ ,

17B इति सर्व्वनागाकर्षणप्रवेशनविधिविस्तरपञ्चमपटल ,

19A सर्व्वडाकिनी[म]न्त्रलक्षणपटल षष्ठ ,

20A हस्तमुद्राप्रयोगकयोजिकाचिह्नलक्षणादिपटल ,

20B सर्व्वडाकिनीक्षोभा पटलोष्टम ,

26B इति सर्व्वयन्त्रोदयो नाम पटलो नवम ,

33A इति श्वासोदयो नाम दशम पटल ,

34B इति सर्व्वमायाविकुर्व्वितो नाम पटलैकादशम ,

36A इति वशकोदयो नाम पटलो नाम द्वा[द]शम ,

37A इति वीरादयपूजासर्व्वकर्म्मोदयो नाम पटलस्त्रयोदशम ,

38A इति देशन्यासवीरादय नाम पटलश्चतुर्दशम समाप्त ,

39B इति कालत्रयोदयमन्त्रतन्त्रकालमङ्गलवचनो नाम मण्डल पञ्चदशम ,

45A इति सर्व्ववीरपटलीसोगणभारिसमायोगचक्रोदयो नाम षोडशम

48A इति रसायनविधिपटलो नाम सप्तदशम ,

51A इति मेलापकनिर्णयो नाम साधनविधिरष्टादशमपटल ,

55A इति बज्रडाकमहातन्त्रे सर्व्वभूतग्रहोत्पत्तिसाधनपटलोनामोन विंशतिम ,

58A इति डाकिनीसमायोगश्वासोदयो नाम विधिपटलविंशति ,

60A इति उत्क्रान्तिध्यानसिद्धविक्रीडितमुद्रायोगोदयो नाम एक विंशतिम पटल ,

60B इति योगयोगिनीरतिक्रीडावाह्यमुद्रासङ्केतलक्षणविधिपटलो नाम द्वाविंशतितम ,

61B इति निर्गमनिग्रहानिकारोनामपटलस्त्रयोविंशतितम ।

62B इति होरागृहो नाम कर्म्मविधिपटल चतुर्विंशतितम ,

63A इति सर्व्वोदयो नाम पटल पञ्चविंशतितम ,

64A इति कालोदय पटल षड्विंशतितम ,

64B इति मद्यश्रवणाधिकारविधिपटल सप्तविंशतितम ,

65B इति चिह्नस्थनिर्णयो नाम पटलोऽष्टाविंशतितम ,

66A इति ज्ञानोदयो नाम पटल एकोनत्रिंशतितम ,

66B इति वज्रसत्त्वनिकुर्व्विनोदयो नाम पटलस्त्रिंशतितम ,

69A इति घण्टानन्दस्नानविधिरेकत्रिंशतिम समाप्त ,

70B इति गुर्व्वाराधनसमयसम्वरापटलो द्वात्रिंशतितम ,

71B मन्त्रविधिपटलस्त्रयस्त्रिंशतितम

72A इति म्लेच्छवज्राभिषेकपटलश्चतुस्त्रिंशतितम ,

72B इति हेवज्रीकरण विधिपटल पञ्चत्रिंशतितम ,

72B इति हेवज्रीकरणे विधिपटल पञ्चत्रिंशतितम

73A इति म्लेच्छनाद्यसमयसम्वरविधिपटल षट्त्रिंशतितम ,

73B इति म्लेच्छसर्व्वायुधमुद्राज्ञानपटल सप्तत्रिंशतितमः

74A इतीदामनविधिपटल षट्त्रिंशतितम पटल ,

77A इति वज्राधिकारपटल एकोनचत्वारिंशतितम

79B इति छत्रकपणमुद्राज्ञानपटल चत्वारिंशतितम ,

87B इत्यालिकालिमन्त्रोदयन्यासपटल एकचत्वारिंशतितम ,

91B इति रत्नसादितत्त्वोदय पटलो द्वाचत्वारिंशतितम ,

93A इति सर्व्वकर्म्मध्यानोदयो नाम होमविधिपटलस्त्रयश्चत्वारिंशतितम ,

94A इति वेताडसाधनाध्यात्महोमविधिपटलश्चतुश्चत्वारिंशतितम ,

94B इति जपविधिपटल पञ्चचत्वारिंशतितम ,

97B इति भूम्यधिवासनसूत्रपातनविधि पटल षट्चत्वारिंशतितम ,

100B इति रसायनदण्डवर्गाधिकारविधिपटल सप्तचत्वारिंशतितम ,

104B. इति सर्व्वकर्म्मप्रसरस्यार्थ होमविधिः पटलो षट्चत्वारिंशतितम ;

111A. इति वज्रडाकमहातन्त्रे रसायन + + + + विधिपटल एकोनपञ्चाशत्तम ;

121B. इति वज्रडाकमहातन्त्रराज्ये वज्रसत्त्वाश्वासरूपाख्यानिर्देशो नाम पञ्चाशतितम ;

125B. इति वज्रडाकमहातन्त्रराजे निर्घण्टपटल एकपञ्चाशतितम समाप्तः ।

## 73.

8060. **प्रज्ञोपायविनिश्चयसिद्धिः ।** *Prajñopāya Viniścaya Siddhiḥ.*

*By* Anaṅga Vajra

Substance, Nepalese paper—white on one side and yellow on the other 7¼×4¼ inches Folia, 42 of which foll 22—30 are missing Lines, 6 on a page Extent in ślokás 440 Character Newari Appearance, fresh Copied under orders

For a description of the MS. from which this was copied, see my *Nep. Cat*, *Vol. II* (1915), pp 64—65

The main work in this MS is Prajñopāya viniscaya siddhih, by Ananga Vajra, who seems to have been a pupil of Śubhākara, from an obscure verse which runs thus in fol 40B :—

40B. गुरुचरणाम्बुजसेवा विरचित(?) मम्हतं शुभाकरास्येन ।
पञ्चो नरखिलजगतो विहितं साधारणं कृपया ।

The main work is the last, there being, as preparatory to the understanding of this, some short works given before it, namely, (1) Yogāvatāra of Nāgarjuna, ending in leaf 2A; (2) Svādhiṣṭhānaprabheda by Āyadeva, ending in fol. 8B; (3) Advayavivarana Prajñopāya-viniscayasiddhi by Ācārya Padmavajra, ending in fol 17A; (4) Nānāsiddhopadeśa —the siddhas being 1. Padmāṅkura (17A), 2. Prajñārakṣita (17A), 3. Nalipāda (17B), 4 Ravigupta (17B); 5. Kṛṣṇā-

carya (17B), 6 Saraha (17B), 7 Mahidhara (18A), 8 Bhurpada (18A), 9 Vinapada (18B), 10 Virapacarya (8B), 11 Varnpacaryya (18B), 12 Nagabudha (18B), 13 Dinnaga (19A) In 20B, the 4th work ends and the main work begins It has five chapters, of which the colophons of the first two are lost in the lacuna

31B इति प्रज्ञोपायविनिश्चयसिद्धौ बोधिचित्ताभिषेकस्तृतीय परिच्छेद समाप्त , 34B ०तत्त्वभावनानाम चतुर्थ परिच्छेद , 41A ०तत्त्वचर्य्यानिर्द्देशो नाम पञ्चम परिच्छेद, प्रज्ञोपायविनिश्चयसिद्धि समाप्ता। कृतिरियमनङ्गवज्रपादाना।

*Post Colophon statement* —

स्वर्पदादौ विचित्र कनककुलिशयोर्योगतोऽसौ विपाक
पश्चात् + + रागानलद्‌लितजगतसङ्घराशि विमर्द्द।
तस्मिन् निर्व्वर्त्यमाणे पवनसहचरे रागवज्रो सरोजे
साथ सम्बोधिमार्गं सकलजिनवनूथोगगम्यादिलक्ष्य ॥
प्राकचक्रीबन्धबद्ध स्वचक्रनियमित मेखलाश्वासबद्ध
कण्ठाग्र धारपात्र कमलकुलिशभगाधिसनिष्ठातशुद्ध
इत्थ वज्राङ्कयाम प्रहरमपिदिन सूत्रवच्चित्तवज्र
धातो वज्रार्थं तूर्णं सम्पुटमथनयेत् कुण्डलाकार (कृति) योगे ॥
शुभ। तालपत्रपुस्तके दृष्ट्वा लिखित ॥ शुभ।

The following extract is from the 5th pariccheda of Ananga Vajra's work, in which it will be seen what the lofty philosophy of Prajnaparamita has come to

36A स्वप्नमायोपम सर्व्वं स्कन्धधात्वादिलक्षण।
धैधातुकमिद सर्व्व ह्यालोक्य [च] समाहित ।
कौकल्यस्यावमिदन्तु जीवितैश्वर्य्यमेव च।
तथाष्टलोकधर्म्मेष्व सर्व्वं यत्ना विदूरत ॥
अप्रकम्प सदा भूत्वा निर्द्वन्द्व स्तब्धनिश्चय।
षट्पारमितायोगेन बुद्धसिद्धिप्रसिद्धये।

36B. बोधावारोप्य चित्तन्तु तत्त्वचर्य्यां समाश्रयेत् ।
व्याचरेत् समयं ज्ञानञ्च मन्त्रमार्गप्रकाशित ।
विघ्नमारादिशान्त्यर्थं पञ्चामृतमधिश्रयेत् ( छयेत् ) ।
एषास्वनुत्तरा रक्षा विन्मुत्रादिव्यवस्थिता ।
ज्वररोग (ज्वरागरा) विष (धा) योग डाकिन्युपद्रवप्रदा ।
मारा विनायकाश्चैव प्रशम यान्त्यनेन हि ।
नरोद्भवं तथाश्वञ्च (स्वञ्च) श्वोद्भमातङ्गसम्भवम् ।
प्रदीप भक्षयेत् प्राज्ञ श्वानमेव च पञ्चम ।
अन्यैश्च समयै ज्ञानश्चित्तस्योत्कर्षकारकै ।
महत्सम्भोगशान्त्यर्थं प्रीणयेच्चित्तवज्रिणं ।
प्रज्ञापारमिता सेव्या सर्व्वथा मुक्तिकाङ्क्षिभि ।
परमार्थे स्थिता शुद्धा सम्वृत्या रूपधारिणी ।
ललनारूपमास्थाय सर्व्वत्रैव व्यवस्थिता ।
अतोऽयं वज्रनाथेन प्रोक्ता बाह्यार्थसम्भवा ।
ब्राह्मणादिकुलोत्पन्ना मुद्रान्वै अन्त्यजोद्भवा ।
दुहीता परभार्य्यांश्च विकृतां विकलां तथा ।
जनयित्री स्वसार च स्वपुत्रीम्भागिनेयिकां ।
कामयेत् तत्त्वयोगेन लघु सिध्यति साधक ।
वज्रादिसम्भवै + + श्चित्तस्योत्कर्षकारकैः ।
करणैर्वाह्यमुद्राभि नानारसविचेष्टितै ।
स्वाधिदेवतयोगेन पञ्चकामगुणैर्वरैः ।
धर्मार्थश्चित्तरत्नस्यात्मानं पूजयेत् सदा ।
गन्धमाल्यादिसत्कारैः क्षीरपूजादिविस्तरै ।
खड्गचन्दनवस्त्राद्यैश्चित्तस्यानन्दकारकैः ।
गम्यागम्यादिसङ्कल्पं नात्र कुर्य्यात् कदाचन ।
मायोपमादियोगेन भोक्तव्य सर्व्वमेव हि ।
धर्मधातुसमुद्भूता न कश्चित् परिपन्थिनः ।
प्रभुञ्जीत यथाकाम निर्विघ्नेन चेतसा ।

सम्भोगार्थमिदं सर्व्वं त्रैधातुकमशेषतः ॥
निर्म्मितं वज्रनाथेन साधकानां हिताय च ।
अनन्तज्ञानसम्पन्ना + + नैव तथागता ॥
सततम्भावनायुक्तनिषिक्तादिषु का कथा ।
सर्व्वभावस्वभावोऽयम्बोधिचित्तस्वरूपत ॥

38B. मुद्रालिंगनसंयोगाद्दन्तावेशप्रवर्त्तनात् ।
सन्तोषाधरपानाच्च तत्कण्ठश्च निपीडनात् ॥
विपुलानन्दसम्भोगात्सद्भूतस्फोटनोद्भवम् ।
न चिरात्सम्भवो राजा वज्रसत्त्व प्रसिद्ध्यति ॥
तथा तथा प्रवर्त्तेत यथा न क्षुभ्यते मनः ।
संक्षुब्धे चित्तरत्ने तु सिद्धिं नैव कदाचन ॥

The following extract from Padma-vajra's work explains Prajñā and Upāya —

9B. तथाचोक्तं; निःस्वभावलक्षणा प्रज्ञा, स्वभावलक्षणा उपाय इति ।
तस्मात् प्रज्ञोपायकरणविधानेन चोदिता
तत्र पुर्व्वंति सत्त्वार्थं विश्वरूपोपलक्षिता । इति ।

तेन तावत् प्रज्ञेति उपाय इति वस्तुद्वयभावद्वयम् । इदानी+ + + + + प्रज्ञया केवलया किं बुद्धत्वं स्यात् । नोचेदुपायमात्रेणापि । उच्यते चेदम् । न प्रज्ञाकेवलमात्रेण बुद्धत्वं भवति, नाप्युपायमात्रेण किन्तु यदि पुनः प्रज्ञोपायलक्षणौ समतास्वभावौ भवत एतौ द्वौ अभिन्नरूपौ भवतस्तदा भुक्तिमुक्ति भवतीति ।

तथाचोक्तम् ।

उपायश्चाभिमतो यस्मात्सैवानुकूलं यत ।
सदानुकूलयोगेन सेवोपाय प्रकीर्त्तित ॥
उभयोर्मिलनं यत्र सलिलक्षीरयोरिव ।
अद्वयाकारयोगेन प्रज्ञोपायस्तदुच्यते ।
प्रज्ञेयं चोपनेतुं च शक्यते यत्र नैव हि ।
प्रज्ञोपाय+ + + + पर्नीकत्वं तदुच्यते ॥
चिन्तामणिरिवाशेष जगत सर्व्वदा स्थितम् ।
भुक्तिमुक्तिप्रदं सम्यक् प्रज्ञोपायस्वरूपत ॥ .

15

मलतन्त्रमुपायतन्त्रम् । तदत्र हेतुः वज्रकुलीनाः सत्त्वाः । परिनिष्पन्ना देवतमूर्त्तिः फलं । उपायो वक्ष्यमाणलक्षण संस्कारो मार्गः । तस्य (तस्य) वज्रधरस्य निगदितमेवमस्येत्यादिवाक्येन ।

4B. इह हि मन्त्रमहायाने आदिकर्म्मिकाणां सत्त्वानां प्रथममवतारार्थ (भाराय) देवतामूर्त्तिभावनैव कथ्यते ।

यदाह ।

आदिकर्म्मिकसत्त्वानां देवतामूर्त्तिभावना ।
निर्द्दिष्टा प्रथमं तन्त्रे सर्व्वकर्म्मप्रसिद्धये ॥

द्वितीये परिनिष्पन्नक्रमे वक्ष्यमाणसूचनापेक्षयैककारयं महोपाय ॥

For a description of the contents of the text see Bendall's Cam. Cat, p 58 It consists of two parts, as mentioned in my Nep Cat for 1915, referred to above. The full name of the text is Hevajra-Ḍākinī-jāla-sambara Tantra.

The Pañjikā also is described in Cam Cat, p 189

For a Tibetan translation of the text see Beckh, p. 74, para. 9, and for that of Kṛṣṇācārya's Pañjikā, see Cord, p. 67.

## 76.

3853. **पञ्चरक्षासूत्राणि ।** *Pañcarakṣā Suttrāṇi*

Substance, palm leaf $14\frac{1}{2}\times2\frac{1}{4}$ inches Folia 135 of which the first 34th to 36th, the 127th and the 130th are missing Lines, 6 on a page Extent in ślokas, 2700 Character Newari of the 14th century Appearance, old, soiled, faded and worn out

The leaves are marked by letter numerals on the left hand and by figures on the right hand side

The five Rakṣāsūttras or protective treatises are :—

33B यानीमानि भदन्त भगवता पञ्चमहारक्षासूत्राणि भाषितानि । तद्यथा । महासाहस्रप्रमर्द्दिनीसूत्रं महामायूरी महाशीतवती महाप्रतिसरा महामन्त्रानुसारणीसूत्राणि भदन्त भगवता पञ्चाभिसम्बन्धितेन अनुज्ञातानि ।

The colophon of the Mahāsāhasrasūttra is not to be found, perhaps being lost in one of the missing or faded leaves

88B. आर्य्यमहामायूरीविद्या राज्ञी सर्व्वार्थसाधनी समाप्तेति ।

117A. महाविद्या राज्ञी महाप्रतिसरायाः कल्पः समाप्त ।

125B. आर्य्यमहाप्रतिसराया महाविद्याराज्ञी रक्षाविधानकल्पो विद्याधरस्वायं समाप्तः ।

129B. आर्य्यमहाशीतवतीनाममहाविद्याराज्ञी मनुमंत्रारक्षासूत्रं समाप्तम् ।

135B. आर्य्य महारक्षामहामन्त्रानुसारिणी नाम महायानसूत्रं समाप्तम् ।

*Post-Colophon.*—

ये धर्म्मा हेतुप्रभवाः etc., etc

## 77.

4078. **पञ्चरक्षा ।** *Pañcarakṣā*

Substance palm-leaf 13×2 inches Folia, 127 Lines, 5 on a page Extent in ślokás, 3400 Character, Bengali of the Kutila type Dated saka 1211 = 1289 A D In good preservation with illustration Complete

There are two sets of leaf-marks on the right side, the original marks being parallel to the third line and the later marks below them. The later marks are not reliable

*Last Colophon* —

महारक्षा महामन्त्रानुसारिणीमहाविद्या समाप्ता ।
येधर्म्मा हेतुप्रभवाः etc , etc देयधर्म्मोऽयं प्रवरमहायानयायिन परमोपासकसाधुदीयोकस्य यदत्र पुण्यं तद्भवतु आचार्य्योपाध्याय मातापितृपूर्व्वङ्गमं कृत्वा सकलसत्वराशेरनुत्तरज्ञानफलावाप्तये, इति ॥ परमेश्वरपरमसौगत परममहाराजाधिराज श्रीमान् गौड़ेश्वरमधुसेनदेवकानां प्रवर्द्धमानविजयराज्ये यत्राङ्केनापि शकनरपतेः शकाब्दाः १२११ भाद्रदि २ ।

The five raksas are :—

37B आर्य्यमहासाहस्रप्रमर्द्दनी नाम महायानसूत्रं समाप्तम् ।

84B. आर्य्यमहामयूरीविद्याराज्ञी, अविलम्बा, पञ्चमुखाद्, प्रतिबद्धा समाप्ता ।

88A आर्य्यमहाशीतवती नाम महाविद्याराज्ञी समाप्ता ।

118B आर्य्यमहाप्रतिसराया महाविद्या राज्ञी प्रथमकल्पः समाप्तः ।

125A. महारक्षा महामन्त्रानुसारिणी महाविद्या समाप्ताः ।

## 78.

### 9970. पञ्चरक्षा । *Pañcaraksā*

Substance, palm leaf 15½×2 inches Folia 102, marked on the left with letter numerals and on the right with Newari figures Lines, 5 per page Character ornamental Newari of the 14th century Appearance, well preserved Complete

*Last Colophon* —

> आर्य्यमहासाहस्रप्रमर्द्दिनी आर्य्यमहामायूरी आर्य्यमहाशीतवती आर्य्यमहाप्रतिसरा आर्य्यमहामन्त्रानुसारिणि ॥ एतानि महारक्षा समाप्त ।

*Post-Colophon Statement* —

> ये धर्म्माः etc., देयधर्म्मोयं प्रवरमहायानयायिनः परमोपासक-महाराजाधिराजपरमेश्वरपरमभट्टारिका श्रीमन्नारायणऽवतार-श्रीश्रीजयस्तम्भदेवस्य विजयराज्ये आर्य्यावर्त्तभूमे नेपालदेशे श्रीमन्तश्रीललितापुरीमहानगरे श्रीमानिगलके नागलस्थाने सर्व्व-संघावतारश्रीवन्दयस्तवकुलमहाविहारावस्थितशाक्यभिक्षुश्रीराकुश स-भार्य्या केतकिलक्ष्मीस्य पुत्र भिक्षुश्रीशिवब्रह्मक सभार्य्या पुरामयि-कस्य पुत्र नायुभाराः । मध्यस्थपुत्र भिक्षुश्रीहृदयसु सभार्य्या किलिमयिकस्य पुत्र श्रीवन्धवराजसु मक्षीभमश्रिनसु सः । कनेष्ठ पुत्र भिक्षुश्रीकुसुमसु सभार्य्यासुग्रामयिकस्य यदत्र पुण्यं तद्भवत्वा-चार्य्योपाध्यायमातापितृपूर्व्वंगमं कृत्वा सकलसत्त्वराशेरनुत्तरज्ञाना-प्तलवायेति । लिखितेयं श्रीकाष्ठमण्डपमहानगरस्थाने चैत्या-मकुम्भाया स्वतक श्रीबर्म्मचन्द्रवंशमहाविहारावस्थित वज्राचार्य्यभिक्षु

श्रीजयसिद्धदासेन रचितं । यथादृष्टं तथा लिखितं लेखिका
नास्ति दोष । न मे दोष न भाव्यते ।
यक्तमूर्द्धयुक्तवाद्यपि तस्य दोषं न मुह्यति ।
उदकानलचोरेभ्यो मूषिकेभ्यस्तथैव च ।
रक्षितव्य प्रयत्नेन मया कष्टेन लिखितम् ॥

श्रेयोऽस्तु सम्वत् ६४० श्रावणमासे कृष्णपक्षे पञ्चम्यायां तिथ्यां रेवतिनक्षत्र शूलयोग (?) शुक्रवासरे ॥ चैय भगवान् । पञ्चमहारक्षा लिखित सम्पूर्णमिति । ६४० (In a later and blurred hand)

सत्पुण्यावरपञ्चरक्षरचितम् गम्भीरधर्म्मोदकं ।
समवर्त्तेषास्वभावगुणगणिका सयुक्तधर्मो वच ॥
शुभमस्तु सर्व्वदा ॥

This is the only MS dated in the reign of Jayaratna malla, who was the first separate king of the kingdom of Kāsṭha mandapa

For a description of the work see Cam Cat of Bendall, pp. 83, 48, 99, 105, 152, 153, 157, 162 175 and 190

Rājendralāla splits up the work into 5 and treats of them separately—(1) Mahāsāhasrapramardinī (Nep Bud Lit, p 164), Mahāmantrānusārinī (p 165), Mahāsāhasrapramardini (p 166), *Mahāpratisarī (p 168)* *Mahāmāyūrī (p 173)*

The Tibetan translation also splits up the work See Beckh, 102B and 103A

## 79.

3854 **क्रियासंग्रहपञ्जिका कुलदत्तपञ्जिका ।** *Kriya-samgraha Panjikā* or *Kuladatta Pañjikā*

*By* KULADATTA

Substance palm leaf 12×2 inches Fol a 176 of which 7 38 54 56 70 75 81 14 101 107 140 142 1 1 168 172 are missing marked with letter

numerals on the left and with figures on the right  Lines 8 on a page  Extent in slokas 5200  Character, Newari of the 16th century.  Appearance old and soiled  Incomplete at the end

*See Dr Rājendralāl's Nepal Catalogue, p 105*

8A, इति कुलदत्तपण्डितविरचितायां पञ्जिकायां प्रथमं प्रकरणम् ।

20B, इति महापण्डित कुलदत्तविरचितायां पञ्जि + + + + + ।

41B, श्रीमहापण्डित कुलदत्तविरचितायां पञ्जिकायां तृतीयप्रकरणम् ।

47B, श्रीमहापण्डित कुलदत्तविरचितायां पञ्जिकायां चतुर्थ प्रकरणमिति ॥

68A, श्रीमहापण्डित कुलदत्तविरचितायां पञ्जिकायां पञ्चमप्रकरणमिति ।

154B, श्रीमहापण्डित कुलदत्तविरचितायां षष्ठमप्रकरणम् ।

*The opening lines are given in the Nep. Budh Lit. of* Rājendralāla

यस्य श्रद्धाप्रज्ञाक्षमावान् व्याकरणकाव्यच्छन्दोविचौतिज्योतिमर्थाखप्रत्याय-वदिति कथा पाठे। नानालिपिनानादेशभाषामभिज्ञानकपुंस्त्रीगणशीलसत्त्व-सम्वेत्ता गान्धर्व्वगीतवाद्यनाट्यायुर्व्वैद्यकेन्द्रजालधातुवादतुलाशास्त्रज्ञः गीतादि-कौशलवशक्लेशाविशिल्पज्ञान् विदितकामशास्त्र प्राज्ञ सहिष्णु दक्षो वाग्मी प्रमत. प्रतिपत्तिज्ञान् सदोत्साहि लोमहर्षः (?) गुणधीशालि समयरक्षनयादिदः भक्तिमान् दशपारमितायतो विगतभयछलमन्यः प्रतिष्ठामण्डललिखननानाकर्म्म-प्रसरनिपुण गुरोराज्ञापरिपालनतत्पर गुरोराज्ञानुगताशालङ्घनकोपादुभावह-दोषप्रकाशन सत्वेषु मैत्रियाम बोधिचित्तवान् सधर्म्मनिष्ठा गुह्यज्ञानपर स्वाभाव (?) महायानविधिविकित्साद्युपत्सर्पयोर्धर्म्मौकम्पना प्रार्द्दचित्तप्रतिच्छेदो भक्त-मनयासेवास्त्रौगुणाननापरिवर्जितः + + + मारामो (?) भवति। एवंविधैः सर्व्वगुणैर्लक्षितस्य सर्व्वदोषरहितस्य मण्डलवर्त्तनादौ योग्यस्य शुभे दिवसे नक्षत्रादौ गृहं गत्वा परनामनमस्कं कृत्वा यथाशक्ति दक्षिणां दत्वा सम्पुटाञ्जलिं कृत्वा याचेयता कुर्य्यात् समन्वादशाचार्य्य अहं अमुकनामा उपासको विहारादिकं कर्त्तुमिच्छामि तदर्थं विज्ञापयाम्यद अधिगतसकलसुगतवचनत्वात्। इत्यनेनाचार्य्य मध्येषणां कुर्य्यात् यजमान ॥

13A, वास्तुपूजामाह ; 87B, इदानीं वास्तुयाग + + , 41A, इदंबा-दोषयं कृत्वा होमं कुर्य्यात् यमोद्धने ; 48B, इदानीं प्रासादलक्षणमभिधीयते ;

44A, इदानीं विशेषलक्षणमभिधीयते , 45A, देवालयस्तु विशेषः , 47A, तस्मिन् काले सधर्मपाठ , 51A, इदानीं दार्व्वादीनां प्रमाणमभिधीयते , 52A, देवालयस्य + + + कोष्ठद्वयेन द्वारस्य व्यायामः ; 55B, ततो द्वारस्थापनानन्तरमग्निपूजामाह , 58A, इतिमन्त्रेण चण्डोत्सवप्रलवार परिजपति ग्रन्थविस्तारभयात्यक्तान्यन्यदावकर्म्माणि , 61A, तदनन्तर वधहेतुकर्म्मसुद्राया पुरतो वज्रधातुमाह , 64A, इति पापदेशनादि, ततो विघ्नतिपूजा कुर्य्यात् मन्त्रमुद्रायुक्तेन 65A, एव विघ्नतिप्रकाराभिः सर्व्वतथागतान् सम्पूज्य चात्मानं निपातयेत् , 66A, इत्यनादिससिद्धियोग , 68B, इति घनोऽभिषेक , इति नामाभिषेक इति वज्रव्रतम् , 69B, इति वीजचिह्नदेवताहङ्कार , 72A, समयमुद्रालक्षणम् , 72B, इति धर्म्ममुद्रा तत कर्म्ममुद्राबन्धमाह , 74A, इति कर्म्ममुद्रा , 76B, इत्याचार्य्याभिषेक , 79B, इत्यादियोगो नाम समाधि , 85A, इति मण्डलराजाग्रीनाम समाधि , 87B, इति कर्म्मराजाग्रीनाम समाधि , 101A, मुद्राविशुद्धि , 101B, चैतमुद्राविशुद्धि , 102B, ईशानस्य कर्म्ममुद्रा . 108A, इति घण्टाधिवासना इति मन्त्राधिवासना , इति रक्ष्माधिवासना , 109B. इति देवताधिवासना 111B, इति बाह्यमण्डलक्षेत्रविधि , 112A, इदानीं तन्त्रोक्त, सूत्रणमुच्यते , 114A, इति दे[व]ताचिह्नपातनम् , इति मण्डलाधिवासना , 116B, इति शिष्याधिवासना , 118B, इति शिष्यप्रवेशविधि , 121A, इति वस्त्रव्रतदानम् । इति मण्डलतत्त्वम् , 122A, इति व्याकरणम् , इत्याश्वासदानम् , 123B, इति प्रज्ञाज्ञानाभिषेकविधि , 124B, इति सहजसम्बोधिरुच्यते, अथ मेवार्थः यौसमाजेऽप्युक्त , 125B, इति चतुर्थाभिषेकविधिः , 129A, इति शुभनिमित्तम् , 129B, इत्यशुभनिमित्तम , 132A, इदानीं सत्त्वाकृतौ हस्तप्रमाणमभिधीयते , इदानीं विधानमाह , 132B, तत्र श्मशानपूजामाह , 135A, इति विधानम् ॥ इदानीं पिण्डिकास्थापनाय नव कोष्ठकविभागोऽभिधीयते , 136A, इदानीं मूलपद्मासनचतुःषष्टिरेकाशीतिकोष्ठकानां प्रत्येक विशुद्धिरभिधीयते , 138A, इति रत्नन्यासविधिः ॥ इदानीं पिण्डिकालक्षणमभिधीयते । स्थाप्यमानदेवस्य सार्द्धसप्ततालप्रमाणो दैर्घ्येण पिण्डिकायाम व्यायामत पादोनपञ्चतालप्रमाणा etc , etc

138B, इदानींम्बिहारप्रतिष्ठा[भिधी]यते , 139A, इदानीं प्रतिमास्थाप

गोयलक्षणमुच्यते, 139B, इदानीं देशना + + + + + +, 141A, प्रतिमाया रूपगुणमुच्यते, 141B, इदानीं दोषोऽभिधीयते, 142B, ... इदानीं पटपुस्तप्रतिमादीनां दशक्रिया अभिधनीया। रजस्वलारजोरञ्जितकर्पटे श्मशानकर्पटे गरधर्मोपि कपालके श्मशानभस्मसयकलशोदकप्रक्षालिते शून्यतात्म तथाभिन्नबोधिचित्तात्मके सर्व्वंतथागतानुप्रवेश्य वार्ध्यं दत्वा, etc, etc

144B, इति योनिसंशोधनम्, 146A, गौरागमनक्रम ; 147B, होम स्तोपनयन, 149B, इति पञ्चासनविधि, 153A, इति नामाभिषेक, 158B, इति गुह्याभिषेक,

155A, चित्रकर्म्मवश पिण्डगण्डिकालक्षण तत ।

एतेषाञ्च प्रतिष्ठान प्रवक्ष्ये शृणुत तथा ॥

ततो निष्पन्ने विहारादौ बहिरभ्यन्तरे च यथास्थाने तथागता बोधिसत्त्वा विद्यादेव्यः क्रोधगणा विद्याधरा लिखनीया, 156B, इति वैश्रवणस्थापनम्, इति बलिमन्त्र, 157A, इति महाकालस्थापनम्, 158A, इति हारीस्थापनम्, 158B, बलिपिण्डकास्थापनमिति गण्डिकालक्षणमित्युच्यते, 159A, आकोटनमुद्गरस्य प्रमाणमभिधीयते, 160A, इति गण्डा कोटनम। इदानीं प्रव्रज्यापदक्षमुच्यत, 163B, इति प्रव्रज्याविधि,

164A, लक्षणं धर्म्मधातुना पूजानामवरोहनम् ।

ओनैौड्ढारोपसंहारा (?) पूजयेद् गणमण्डलम् ॥

धर्म्मधातुना लक्षणमभिधीयते 176B इति उच्छिष्टपिण्डमन्त्र

The Manuscript comes abruptly to an end

23B, तत शुभे शुभोद्दात्य विश्वाजपद्मचिह्नानि लिखेत। महावैरोचनस्य भाले पञ्चशूचिकवज्र सत्त्वरश्मा नीलवज्र रत्नवज्राङ्कितरत्न धर्म्मरश्मो वज्राङ्कितपद्म कार्म्मवज्रादिश्च वज्रम्। अक्षोभ्यस्य नीलपञ्चशूचिकवज्र वज्रसत्त्वस्य शुभ पञ्चशूचिकवज्र वज्रराजस्य वज्राङ्किताङ्कुशम्। वज्ररागस्य शरधनुः वज्रसाधो सवज्रभुजद्वयेन साधुकारप्रदान। रत्नसम्भवस्य वज्राङ्कितरत्नम्। वज्ररत्नस्य वज्राङ्कितरत्नमाला। वज्रतेजस्य सूर्य्य वज्र[के]तोश्चिन्तामणिवज्रम्। वज्रभासस्य वज्राङ्कितदन्तपङ्क्ति। अमिताभस्य वज्राङ्कितपद्म। वज्रधर्म्मस्य समालपद्मम्।

अमोघसिद्धिना विश्ववज्र। वज्रकर्म्मणः स एव। वज्रप्रभिनस्य वज्रद्वयस्य

वज्रघण्टिकस्थमार्घं । वज्रपाशस्य वज्राङ्कितदण्डपाशम् । वज्रावेशस्य मुष्टिबद्धा गृहीत
पञ्चसूचिकवज्रम् । वज्रलास्याया वज्रदर्पम् । वज्रमालाया रत्नमाला । वज्रगीताया
वीणा । वज्रनृत्यायास्त्रिसूचिकवज्राङ्कितकरद्वयम् । वज्रधूपाया धूपकटच्छुक ।
पुष्पायाः पुष्पकरण्डकम् । दीपाया दीपयष्टिः । गन्धाया पीत गन्धभाज
मैत्रेयस्य नागकेसरनागपुष्पम् । अमोघदर्शिन नेत्राम्भोज । सर्वापायञ्ज-
हस्याङ्कुशम् । सर्वशोकतमोनिर्घातनमिति दण्डम् । गन्धहस्तिन शङ्ख । शूरङ्गमस्य
खड्गम् । गगनगञ्जस्य पद्मस्थधर्मगञ्ज । ज्ञानकेतोश्चिन्तामणिध्वज अमितप्रभस्य
कलशम् । चन्द्रप्रभस्य चन्द्रम् । भद्रपालस्य सनालरत्नम् । जालिनीप्रभस्य वज्र-
पञ्जरम् । वज्रगर्भस्य सवज्रनीलोत्पलम् । अक्षयमते कलशम् प्रतिभानकूटस्य
पद्मस्थरत्नकूटः समन्तभद्रस्य रत्नमञ्जरी वज्राङ्कुशस्य अङ्कुश वज्रपाशस्य पाशः ।
वज्रस्फोटस्य शृङ्खला ।

100A इदानीं प्रव्रज्याविधानमुच्यते

*तदुक्त विनय ।*

आचार्योपाध्यायैः प्रव्राजयितव्यमुपसम्पादयितव्य इति भिक्षवो न जानन्ति
कथं प्रव्राजयितव्यं कथमुपसम्पादयितव्यमिति भगवानाह यस्य कस्यचित्
प्रव्रज्यापेक्ष उपसंक्रामति । स तेनासौ आन्तरायिकान् धर्मान् पृष्ट्वा । आदौ
त्रिशरणगमनानि पञ्चशिक्षापदानि उपासकसंवरश्च दातव्य । चैत्यवन्दना कार-
यित्वा आचार्यस्य पुरतो मण्डके कारयित्वा उत्कुटुकासनेनाञ्जलिं प्रगृह्य च
वक्तव्य । ब्रूहि अहमित्थंनामा यावज्जीवं बुद्धं शरणं गच्छामि द्विपदानामग्र्यम् ।
धर्मं शरणं गच्छामि विरागाणामग्र्यम् । सङ्घं शरणं गच्छामि गणानामग्र्यम् ।
त्रिरपि तत पञ्चशिक्षापदं देयम् । अहमित्थंनामा यावज्जीवं प्राणातिपातात्
प्रतिविरमामि । अहमित्थंनामा यावज्जीवमदत्तादानात् प्रतिविरमामि । अह-
मित्थंनामा यावज्जीवं काममिथ्याचारात् प्रतिविरमामि । अहमित्थंनामा याव-
ज्जीवं मृषावादात् प्रतिविरमामि । अहमित्थंनामा यावज्जीवं सुरामैरेयमद्य
प्रमादस्थानात् प्रतिविरमामि । त्रिरपि । एवं त्रिशरण(ग)मनतो पञ्चशिक्षापदा-
दिकामुपासकशिक्षामाधारयितुम् । तत आचार्यो याचितव्य । समन्वाहर अह-
मित्थंनामा आचार्यं याचे । आचार्योऽप्याह प्रतिभिक्षे । त्रिरपि । तत उपाध्यायो
याचितव्य समन्वाहर उपाध्याय भवान् उपाध्यायो भवतु अह इत्थंनामा उपा-

ध्यायेन प्रव्रजिष्ये॥ त्रिरपि तत केशानवतार्य्य चूड़ा स्थापयितव्या। तत प्रष्टव्य। अद्यापि त्व गृहिवासमसमान एव। किं प्रव्रज्याया निश्चय इति। यदि ब्रवीति निश्चय इति तदा अवतार्य्य चतु समुद्रजले स्नापयित्वा काषायवस्त्रैराच्छाद्य वक्तव्य॥ ब्रूहि॥ अहमित्यनामा यावज्जीव गृहलिङ्ग परित्यजामि प्रव्रज्यालिङ्ग समाददे॥ त्रिरपि॥ तत प्रव्रज्याचित्तमाभिमुखीभाव कृत्वा प्रव्राजयेत्॥ प्रव्रजनात् गृहस्थनामपरित्यागेन निकायानुरूपेण भिक्षुनामोच्चारणपूर्व्वं त्रिशरणगमन कारयेत्। ब्रूहि॥ अहमित्यनामा यावज्जीव बुद्ध शरण गच्छामि, द्विपदानामग्र्यम्॥ अहमित्यनामा यावज्जीव धर्म्म शरण गच्छामि विरागाणामग्र्यम्। अहमित्यनामा यावज्जीव सङ्घ शरण गच्छामि गणानामग्र्यम्॥ त्रिरपि॥ ततो दशशिक्षापदानि दातव्यानि। समन्वाहर आचार्य्य। यथा ते आर्य्यार्हन्तो यावज्जीव प्राणातिपात प्रतिविरता॥ एवमहमित्यनामा यावज्जीव प्राणातिपातवैरमण्या श्रामणेरशिक्षा समाददे। एवमेवाह प्रथमेनाङ्गेन तेषामार्य्याणामर्हता शिक्षायामनुशिक्षे अनुविधीये अनुकरोमि यथा ते आर्य्या अर्हन्तो यावज्जीव अदत्तादानमब्रह्मचर्य्यमृषावादसुरामैरेयमद्यप्रमादस्थाना नृत्यगीतवादित्र माल्यगन्धविलेपनवर्णकधारणमुच्चशयनमहाशयना कालभोजनजातरूपरजतप्रतिग्रहात् प्रतिविरता॥ एवमेवाहमित्यनामा यावज्जीव अदत्तादानवैरमण्यश्रामणेरशिक्षापद समाददामि। अहमित्यनामा यावज्जीव अब्रह्मचर्य्यवैरमण्यशिक्षापद समाददे। अहमित्यनामा यावज्जीव मृषावादवैरमण्य शिक्षापद समाददामि। अहमित्यनामा यावज्जीव सुरामैरेयमद्यप्रमादस्थानवैरमण्यशिक्षापद समाददामि। अहमित्यनामा यावज्जीव उच्चशयनमहाशयनशिक्षापदं समाददामि॥ अहमित्यनामा यावज्जीव नृत्यगीतवाद्यवैरमण्यशिक्षापदं समाददामि॥ अहमित्यनामा यावज्जीव माल्यगन्धविलेपनवैरमण्य शिक्षापद समाददामि॥ अहमित्यनामा यावज्जीव जातरूपरजतप्रतिग्रहवैरमण्य शिक्षापद समाददामि॥ त्रिरपि॥ अनेनाह दशमेनाङ्गेन तेषामार्य्याणामर्हता शिक्षामनुशिक्षे अनुविधीये अनुकरोमि। ॥ ततः पात्रचीवरं पर्य्येषितव्यं आचार्य्योपाध्याया वध्येषितव्यौ। सन्निपतिते सघमण्डलक कृत्वा दक्षिण जानुमण्डल पृथिव्यां प्रतिष्ठाप्य कृताञ्जलिमाधाय॥ समन्वाहर आचार्य्य अहमित्यनामा आचार्य्य अध्येषयामि इद चीवर सङ्घस्य विश्वासे सङ्घपरिभोगायाधितिष्ठन्तु॥ तथा॥ समन्वाहर आचार्य्य अहमित्यनामा आचार्य्य अध्येषयामि इद चीवर राजकुलसमवायाधि

तिष्ठन्तु। तथैव समन्वाहर आचार्य अहमित्थंनामा आचार्यं अध्येषयामि इदं चीवरं ग्रामनगरनिगमारामपल्लीपत्तनगमनायाधितिष्ठेत्। समन्वाहर आचार्य अहमित्थंनामा आचार्यं अध्येषयामि। इदं पात्र ऋषिभाजनभिक्षाभाजनभोजनपरिभोगिकमधितिष्ठतु। तथा समन्वाहर आचार्य अहमित्थंनामा आचार्यं मध्येषयामि इमां भिक्षाभाजनकुण्डिकामधितिष्ठतु॥ तथा समन्वाहर आचार्य अहमित्थंनामा आचार्यं अध्येषयामि इमां खिक्खिरिकामधितिष्ठतु॥ त्रिरपि॥ समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि इदं चीव[रं] सङ्घस्य विश्वाससङ्घपरिभोगायाधितिष्ठतु॥ तथा समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि। इदं चीवरं राजकुलगमनायाधितिष्ठतु॥ तथा समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि। इदं चीव[रं] ग्रामनगरनिगमारामपल्लीपत्तनगमनायाधितिष्ठन्तु॥ समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि इदं पात्र ऋषिभाजन भिक्षाभाजन पारिभोगिकमधितिष्ठतु। तथा समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि। इमां भिक्षाभाजनकुण्डिकामधितिष्ठतु तथा समन्वाहर उपाध्याय अहमित्थंनामा उपाध्याय अध्येषयामि इमां खिक्खिरिकामधितिष्ठतु॥ त्रिरपि॥ समन्वाहरन्तु आचार्यसङ्घा अहमित्थं नामाचार्यसङ्घा अध्येषयामि॥ इदंचीवरं सङ्घस्य विश्वासे सङ्घपरिभोगायाधितिष्ठन्तु॥ समन्वाहरन्तु आचार्यसङ्घा अहमित्थंनामा आर्यसङ्घानामध्येषयामि। इदंचीवरं राजकुलगमनायाधितिष्ठन्तु॥ समन्वाहरन्तु आर्यसङ्घा अहमित्थंनामा आर्यसङ्घामध्येषयामि॥ इदं चीवरं ग्रामनगरनिगमपल्लीपत्तनगमनाय अधितिष्ठन्तु॥ तथा समन्वाहरन्त्वार्यसंघा अहमित्थंनामा आर्यसंघा अध्येषयामि॥ इदं पात्र ऋषिभाजन भिक्षाभाजन भोजनपारिभोगिकमधितिष्ठन्तु॥ तथा समन्वाहरन्त्वार्यसङ्घा अहमित्थंनामा आर्यसङ्घानध्येषयामि॥ इमां भिक्षाभाजनकुण्डिकां+ + + + + + + + + + + + + + आर्यसङ्घा अहमित्थंनामा आर्यसङ्घानध्येषयामि॥ इमां खिक्खि[रि]कामधितिष्ठन्तु॥ त्रिरपि॥ तत आचार्येन प्रदातव्यम्। चीवरमन्त्रमन्त्रेण ॐ नम समन्तबुद्धानां सर्वतथागताधिष्ठितायचीवर स्वाहा। तत समन्वाहरन्तु भदन्त अहमित्थंनामा इदं चीवरं सङ्घस्य विश्वासपरिभोगाय धारयामि॥ तथा समन्वाहरन्तु भदन्ता अहमित्थंनामा इदं चीवरं राजकुल

गमनाय धारयामि । समन्वाहरन्तु भदन्ता· अहमित्थंनामा इदं चीवरं ग्रामनगर-निगमपल्लिपत्तनगमनाय धारयामि । समन्वाहरन्तु भदन्ता अहमित्थंनामा इदं पात्रं ऋषिभाजनं भिक्षाभाजनं भोजनोपभोगाय धारयामि । समन्वाहरन्तु भदन्ताः अहमित्थंनामा भिक्षाभाजनकुण्डिका धारयामि । समन्वाहर भदन्ता अहमित्थंनामा खिक्खिरिका धारयामि ॥ तथा समन्वाहरन्तु भदन्ताः अहमित्थं नामा आर्य्याख्यासम्वरमासंपत्स्ये ॥ साधुसम्वर सुष्ठ सम्वरिष्ये । समन्वाहरन्तु भदन्ता अहमित्थंनामा यदा सङ्घस्य सामग्री लप्स्ये तदा अनेन सङ्घेन सार्द्धं पोषधं करिष्ये । शीलस्कन्धस्य परिपूरये । समाधिस्कन्धस्य प्रज्ञास्कन्धविमुक्तिज्ञानदर्शन-स्कन्धस्य परिपूरये । त्रिरपि । मन्त्रवि + + + + इति प्रव्रज्याविधिः ॥—महापण्डितकुलदत्तविरचितायां कुलपञ्जिकायां सप्तम प्रकरणम् ॥

*No work on the rituals of the Maháyána School of Bud dhism has yet been obtained.* So an attempt has been made here to give that ritual in as complete a form as pos sible in a catalogue The chapter on initiation has been copied *in extenso, so that it may be compared with the* Hínayána rituals as given in the Golden Book

## 80.

### 4728. क्रियासंग्रहपञ्जिका । *Kriyāsamgraha Pañjikā.*

*By* KALADATTA

Substance Nepalese paper 13¼×4 inches Folia 194 Lines, 7 on a page Extent in ślokas 3100 Character Newari Appearance, discoloured Complete

*Colophon.*—इति श्रीमहापण्डितनिसङ्गाचार्य्य श्रीकुलदत्त विरचितायां क्रियासंग्रहोनामपञ्जिकायां अष्टमा प्रकरणं समाप्त ॥

*Post-Col:*—संवत् ८३६ माघ कृष्णसप्तमी स्व संवत्सर सपोङ्केया । आवया संवत्सर ७६२ मार्गशिर कृष्णसप्त ॥ सवत् ८४० फाल्गुन कृष्ण षष्ठ्यां कुम्भ आदित्यवारः सम्पूर्णमिति । लिखित श्रीभगतापुलि-महानगरो दक्षिणदिग्भागप्रतिविहारे: श्रीरदेवतालोके नगस्य·-परसेवित, नित्यं नित्य धर्म्मकर्म्मसेवकः धर्म्मदेव स्वयंवताधकारा

आसीदन् मानाङ्गादौ . . . ...श्रीदत्ताचार्य्य नयदयवनाधकार दयका सुरौ । राजाधिराजः श्रीरत्नजितमल्लदेवस्य विजयेराज्ये मिति । शुभ ।

*It ends* —ततो वह्नौ यदा द्दोमाग्निश्चिन्ताममयपाद्दृति तदा रत्नाप्रवाद्दोक्त विधिनैव भस्मप्रवाह कुर्य्यादिति ।
निरीक्षतक्रमनिखिल मयाय +संदृतेवाहनरा विशुद्धा ।
नापूर्व्वग्रन्थेन सुशोभनेन तथापि सतः सुधिय क्षमध्व ।
सा. सरल मनघ श्रीकुलदत्तेन योजित ग्रन्थ ।
यजमानमनोहरणं निखिलाचार्य्यस्य परमाभरण ।
यशो विधाय विधिना यदवापि शुभ मया ।
वयसस्तोस्तु लोकोय तेनातधमयो वर ।

The preceding MS of this work comes to an end with the 7th Prakarana The topics of the 8th are —179B इदानी चतुर्णामपि चाकृतीनां सामान्येन विशुद्धिरच्यते। 181A, ध्वजानां लक्षण 186B कलशप्रतिष्ठा, 187A चामर प्रतिष्ठा ध्वजप्रतिष्ठा, पताकाप्रतिष्ठा, 188A जीर्णोद्धारविधि । इदानी मयद्रूपम विधिरच्यते ।

## 81.

1758 Two Works

### I —तथागतप्रतिविम्बप्रतिष्ठानुशंसवर्णनधर्म्मपर्य्यायः ।

*Tathāgatapratiimbapratisthānuamsaiarnana Dharma paryāya*

### II —दिव्यभोजनावदान *Diiyabhojanāradāna*

Substance palm leaf 12×— inches Fol a 6 numbered 1 and 6 to 12 Lines, 5 on a page Character Newari Appearance old and discoloured Dated N S 3?

I —Comes to an end in 7B, line 1, then begins II

## I

*Beginning* — ॐ नमोऽस्तु बुद्धाय ।

एवम्मया श्रुतमेकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे । अथायुष्मानानन्दो येन भगवांस्तेनो-पसंक्रामदुपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य एकान्तेऽस्था-देकान्ते स्थित आयुष्मानानन्दो भगवन्तमेतदवोचत् । किं भगवन् कुशलमूलं सम्मार्जनप्रदानस्य । किं मण्डलकप्रदानस्य । किं छत्र गमनशिक्षापदाना । किं तथागतप्रणामाञ्जलिकर्मणः । किं भदन्त कुशलमूलं संसारे न क्षीयते न क्षीयते अत्यन्तं निर्वाण-मुपनयति । किं तथागतविम्बकरणे । भगवानाह । इत्यादि ।

*Colophon* — तथागतप्रतिबिम्बप्रतिष्ठानुशंसावर्णनो नाम धर्मपर्य्याय । समाप्त । सम्वत् ८८५ फाल्गुनि शुदि १० बृहस्पतिदिने ।

## II.

*Beginning* — ॐ नमो बुद्धाय ।

दिव्यभोजनमिति बुद्धो भगवान् सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमन्त्रिवर्गैर्मि (?) पौरैः श्रेष्ठिभिः सार्थवाहैः देवैर्ना-गैर्यक्षैरसुरैः गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यलाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारादीनां श्रावकसंघैः राजगृहे विहरति । इत्यादि ।

*Colophon* —दिव्यभोजन अवदान समाप्त । सम्वत् ८८५ फाल्गुनि शुदि १२ बुधवासरे । नमो बुद्धाय नमो धर्माय नमः संघाय ।

## 82.

4840 **वसुन्धरोद्देश ।** *Vasundharoddeśa*

Substance palm leaf 9¾ × 2 inches Folia 6 Lines 6 on a page Extent in ślokas 75 Character, Newari of the 18th century Appearance old and discoloured

A ritual of Vasudhārā or the Goddess of Wealth

*Beginning* —ॐ नमो भगवति वसुधारायै ।

समन्ताद्दरंतु मा बुद्धा धर्मे[ण] दिक्षु सस्थिता ।

भगवति वसुधारे ज्ञानभूर्त्ति नमामि

ह गगगगुणमनोरथातोरणामन्त्रणयोवनी ।

अशमिगुणनिधान काचन रत्नवर्षा

वज्रनवधनवृद्धि धामरा रत्नकूटा ॥

मैत्री करुणा मुदिता उपेक्षा । ॐ स्वभावशुद्धा सर्व्वधर्म्माय भावात्मकोऽहं शून्य विभाव्य शून्यतानन्तर ॥ पटकारेण विश्वदलपद्म पद्मकर्णिकोपरिचन्द्रमण्डलम् । तदुपरि अकार । तदुपरि ज्ञानेन भद्रघट भद्रघट परिणामेन वसुधारा भगवती भावयेत् । इत्यादि ।

*Colophon* —इति वसुन्धरादेव दोषयेत् समाप्ता ।

यदि शुद्धमशुद्ध वा लेखको नास्ति — — — — ॥

## 83

9971 **दमनकमहारक्षा (महातन्त्रराज)।** *Damanaka Mahārakṣa (Mahā Tantrarāja)*

Substance palm leaf 11 × 2 inches Folia 5, marked 2 to 7 Lines 5/6 on a page Extent in ślokas 125 Character Newari Date, N S 371=A D 1251 Appearance old and dilapidated

*Last Colophon* —इति श्रीदमनके महारक्षातन्त्रराजसर्व्वत्रथापिश्री मत्रसमुच्चयस्थान समाप्तम् ॥

*Post Colophon Statement* —शुभम् ॥

सवत् ३७१ मार्गवदि ४ ॥ भुयात् ।

The first leaf of the MS seems not to belong to this work It has been substituted for the first leaf

The second leaf begins —

निर्व्वाण ॥ ॐ ह्रूं श्रीं स्रूं स्रौं ॐ स्रौं पाषु । ॐ ५ सर्व्वाङ्गमध्योप भैरवाय —(Then a Kūṭakṣara Mantra—or a combination of a

number of consonants with a single vowel and with the sign of mātrā ) त्र ख्र ह्र पाए ५ एं फ्रौं श्रौं

ॐ श्रौं महानिर्व्वाणेश्वरानन्दनाथ ईश्वरीशक्तिसहिताय सिद्धान्ताधिकारीभैरव ।

CONTENTS

2A 1 5 महानिर्व्वाण — In the same line गायत्री — 2B 1 2 इति निर्व्वाणमन्त्र, अथ पञ्चमीपूजनम् — 2B 1 5 इति पञ्चमीपूजा ततो हनुभैरवपूजनम् — 2B 1 6 ॐ ५ नमो भगवते वानरराजाय महाबलपराक्रमाय गगनगमन—सागरोत्तरण लङ्काप्रमथन एहि एहि — 3A 3 इति हनुभैरव पूजा इति द्वादशाङ्गन्यास 3B 1 त्रिविद्यान्यास — 3B 2 षोडशकाष्टक न्यास — 3B 5 ग्रथिन्यास — 4A 1 एकाक्षरी षोढान्यास — In the same line प्रणवपञ्चकन्यास — 4A 2 निरात्मान्यास — 4B 4 इति पूजा — 5A. 1 अथ परस्य सेनालयनविधि माह — 5B 4 पञ्चोपचार पूजा — 7A 1 इति न्यासश्लोक ।

The first leaf seems to be about the ritual of Caityapūjana by the Buddhists

*It begins* — ॐ नमो बुद्धाय ।

रत्नप्रस्थानसूत्रान्ते प्रोक्त[ ] यच्चैत्यपूजनम ।
तदहं सम्प्रवक्ष्यामि सत्त्वानां शुभवृद्धये ॥

तत्रादौ स्नानमुखशौचादि परिहितशुचिवस्त्र सञ्चोदितपूजोपकरण कचि द्विजनमनोऽनुकूले प्रदेशे सुखासने पूर्व्वाभिमुखमुपविष्टो मौनीभूय सलक्षण सधातुकं अधातुकं वा चैत्यमेकं पञ्च नव वा मण्डकादौ निवेश्य पुरतो गन्धमण्डल वस ज्ञानमण्डलेऽवस्थाप्य प्रतीत्यसमुत्पन्नमायादिसमजगदधिमुच्य झटिति विरोचनरूप चन्द्रस्थसूक्ष्मोङ्काराधिष्ठितहृदयमात्मानं विभाव्य बोध्य श्रीमुद्रां बद्धा शिर कण्ठहृतसु चक्रपद्मवज्रमुद्रिस्सु चन्द्रसूर्यमध्यस्थान् सुक्ष्मरक्तलक्षणान् ॐ श्रां फ्रौं कारान दृष्ट्वा पूजादिकं च यथादेशाधिष्ठाय पुरस्थभट्टारकं सूर्य्योदय झटिति चतुर्भुजमण्डलस्थसुमेरूपरि पद्मे अष्टदले ॐ ह्रां श्रीं फ्रौं खं लां मां यां तां कारेण चन्द्रसूर्य्यचतुष्टयचन्द्रचतुष्टयस्थसत्त्वशैलाधिष्ठितचक्रादिचिह्नपरिणतान् वैरोचना

